युज्यते अनेनेतियोगः समाधिपदवाच्यः। यथा स्मर्य्यते "तत्समञ्च द्वयोरैक्यञ्जीवात्मपरमात्मनोः। प्रणष्टसर्व्वसकल्पः समाधिरभिधीयते" यद्यपि समाधिः सार्व्वभौमश्चितधर्म्मः। चित्तभूमस्तु क्षिप्तं मूढं विक्षिप्तम् एकाग्रम् निरुद्धम् इति। तत्र क्षेपमोहविक्षेपोपसर्ज्जनीभूतः समाधिः योगपक्षे न वर्त्तते। एकाग्रे चित्ते तु योयथार्थमर्थम्प्रकाशयति क्लेशान् क्षपयति कर्म्मबन्धनानि श्लथयति निरोधयोग्यताञ्जनयति सोऽपि समाधिर्योग इत्याख्यायते। परन्तु तत्र ज्ञातृज्ञानज्ञेयत्वरूपत्रिपुटीसद्भावात् ततः विकल्पादिसत्त्वाच्च स सम्प्रज्ञातः सविकल्पपदवाच्योभवति। सर्व्ववृत्तिनिरोधे त्वसम्प्रज्ञातसमाधिर्विकल्परहितोमुख्ययोगपक्षे वर्त्तते। तत्र निरुक्तत्रिपुटीलयात् अद्वयस्वरूपस्थितिरूपत्वात् सोऽसम्प्रज्ञातोनिर्विकल्पपदवाच्योभवतीत्यर्थः। स एवात्र स्मृतौ प्रणष्टसर्व्वसङ्कल्पनामा समाधिरभिधीयते। एतमेव श्रीमान् पतञ्जलिः "योगश्चित्तवृत्तिनिरोधः" इतिसूत्रेण लक्षयति। परन्तु श्रीमान् पूज्यपादोऽयं सूत्रकारोऽस्मिन् ग्रन्थे "स्वरूपपरिचयः" इतिसूत्रेण योगं लक्षयन् पूर्व्वोत्तरक्रमेण सम्प्रज्ञातमसम्प्रज्ञातञ्च अत्रैवान्तर्भावयतीतिवेदितव्यम्। सच पूर्व्वोत्तरक्रमः यथाशक्तिगुरुचरणारविन्दमकरन्दलिहा मयात्रविशदीक्रियते अत्र परिचयशब्दः क्रमबोधपरः यथायं देवदत्तः भारतवर्षीयइत्यवगतः ततोमैथिल इति ततोब्राह्मण इति ततः पण्डित इति ततस्तत्त्वविदिति च। यद्वा अयम्पुमान् भवदत्तपौत्रः शिवदत्तपुत्रः स्वयं देवदत्तनामेति। भवति चक्रमवोधोदाहरणम् कविमाधकृतौ "चयस्त्विषामित्यवधारितम्पुरा ततः शरीरीतिविभावितकृतिम्। विभुर्विभक्तावयवम्पुमानिति। क्रमादमुं नारद इत्यबोधि सः" इति श्रीमान् स्वयं श्रीकृष्णचन्द्रः उत्तरगीतायाम् ब्रह्मस्वरूपम् वक्ष्यमाणश्लोकेन क्रमेण बोधयति "आत्ममन्त्रस्य हंसस्य परस्परसमन्वयात्। योगेन गतकामानाम् भावना ब्रह्म उच्यते" आत्ममन्त्रस्येत्यत्र आत्मशब्देन जीवात्माभिधीयते आत्मनः मन्त्रस्य आत्ममन्त्रस्येतिविग्रहात् आत्मनः मन्त्रेण सह सम्बन्धदर्शनात् मन्त्रस्य तु अनन्तरोक्तहंसस्यैव दर्शनात् विसर्गान्तहंस इतिमन्त्रस्य अजपेत्यभिधानात् अजपायाश्च अजपाख्यगायत्र्या इतियावत् जीवोपस्थितिक्रियाविषयत्वात् अत्रत्यहंसस्य अजपेत्यभिधानत्वम् जीवोपस्थितिक्रियाविषयत्वञ्च "हंसो हंसप्रकृत्याख्यो हंपुमान् प्रकृतिस्तु सः। अजपा कथिता ताभ्यां जीवोया-

मुपतिष्ठते" इत्यादिस्मरणात् उपपद्यते। एतावता उक्तम्भवति जीवमन्त्रस्य हंसस्येति हंस इतिमन्त्रावयवभूतयोः पूर्व्वापरवर्णस्वरूपयोः सानुस्वारहकारसविसर्गसकारयोः परस्परसमन्वयात् "पुरुषन्त्वाश्रयं मत्वा प्रकृतिर्नित्यमात्मनः। यदा तद्भावमाप्नोति तदासोऽहमिदम्भवेत्" इतिस्मरणात् अन्योन्यस्थितिविनिमयात् सोहमित्याकारेण परिणतत्वादित्यर्थः "यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते" इतिश्रवणलक्षितनिष्कामानां विषयवितृष्णानामित्यर्थः। योगेन "सकारार्णं हकारार्णं लोपयित्वा प्रयत्नतः। सन्धिङ्कुर्यात्पूर्व्वरूपन्तदाऽसौ प्रणवोभवेत्" इतिस्मरणानुसारेण सन्धिकरणेन ओङ्कारस्य ओमित्यस्य च सम्मेलनेनेतियावत् परिणतप्रणवसम्बन्धिनी या भावना सा "ओमित्येकाक्षरम्ब्रह्म" इतिस्मरणात् "ओमित्येवं ध्यायथ आत्मानम्" इतिश्रवणाच्च निजविषयीभूतप्रणवात्मब्रह्माकारत्वात् ब्रह्म उच्यते "तस्य वाचकः प्रणवः" "तज्जपस्तदर्थभावनम्" इतिपातञ्जलसूत्रद्वयमपि प्रकृतम्पोषयतीति वेदितव्यम्। एतावता उक्तम्भवति। "हम्पुमान्" इतिस्मरणात् हम्पदलक्षितोजीवात्मा पुरुषः "प्रकृतिस्तु सः" इतिस्मरणात् सःपदलक्षिताम्प्रकृतिमात्मत्वेनानुसन्धत्ते। तथा च श्रुतिः "अजामेकां लोहितशुक्लकृष्णां वह्वीम्प्रजां जनयन्तीं सरूपाम्। अजोह्येकोयुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्यः" इत्यादि। तथास्मृतिरपि "गुणैर्विचित्ताः सृजतीम् सरूपाः! प्रकृतिम्प्रजाः विलोक्य मुमुहे सद्यःस इह ज्ञानग्रहया एवम्पराभिध्यानेन कर्त्तृत्वम्प्रकृतेः पुमान् कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते" इति अत्र आरम्भावस्थायां स्वरूपस्य आविद्यकावस्थितिः परिचीयत इतिवेदितव्यम्। ननु सर्व्वोपि जनः निजां सांसारिकीं दशां जानाति ततोऽलमत्र तत्परिचयेनेतिचेन्न, दृश्यते लोके सर्व्वोजनः स्वं रोगिणमवगत्य पुनः प्रतीकारेण स्वस्य रोगं निवर्त्तयति। श्रूयते वेदे "अविद्यया मृतिं तीर्त्वा" इति। असत्यां तु नाड़ीशुद्धौ अभ्यासारम्भकालिका योगाभ्यासोपक्रान्तिरूपेतिभावः। आरम्भावस्थाच वेदितव्या। न निरुक्तलक्षणेतिवेदितव्यम्। आरम्भावस्था शिवसंहितायाम् "यदा तु नाड़ीशुद्धिः स्यात् योगिनस्तत्त्वदर्शिनः। तथा विध्वस्तदोषस्य भवेदारम्भसम्भवः" इति। अभ्यासानन्तरम् सत्यान्तु नाड़ीशुद्धौ "सकारेण बहिर्याति हकारेण विशेत्पुनः। प्राणस्तत्र स एवाहम् हंस इत्यनुचिन्तयेत्" इतियोगशास्त्रव्यपदेशात् हंस इतिमन्त्राभ्याससमये

आरम्भघटपरिचयनिष्पत्यभिधानास्ववस्थासु प्रथमावस्था आरम्भाख्या निरूक्तलक्षणलक्षिता वेदितव्या। आरम्भावस्थाकालिकहंस इत्याकारसम्पत्यनन्तरम् सोहमित्याकारसम्पत्तौ सःपदलक्षिता प्रकृतिः हम्पदलक्षितम्पुरुषम् आत्मत्वेनानुसन्धत्ते अर्थात् बुद्धिः प्रकृतिपदवाच्या आत्मभावमाप्नोति जले सैन्धवखिल्यवत् समुद्रे सरिद्वत् नैजं रूपं सुखित्वं दुःखित्वम्मूढ़त्वञ्च विहाय आनन्दादिरूपेण परिणमत इत्यर्थः। तदा स्वरूपस्य "तथात्ममनसोरैक्यं समाधिरभिधीयते" इति स्मरणात् घटावस्थायां समाहितस्थितिः परिचीयत इतिवेदितव्यम्। यद्वा हंस इत्यनुचिन्तने हम्पदलक्षितोजीवात्मा पुरुषः सः पदलक्षितः प्रकृष्टा जगज्जन्मस्थितिभङ्गरूपा कृतिः कर्म्म यस्येतिप्रकृतिः "प्रकृतिश्चप्रतिज्ञादृष्टान्तानुपरोधात्" इतिव्याससूत्रव्यपदिष्टः ईश्वरः तमीश्वरं आत्मत्वेनानुसन्धत्ते। स्वस्य संसारित्वं निवर्त्तयति। अत्र आरम्भावस्थायां स्वरूपस्य पारमार्थिकस्थितिः परिचीयत इतिवेदितव्यम्। तदनन्तरम् स ईश्वरः हं जीवः इत्यनुसन्धानेन पुरुषः ईश्वरस्य परोक्षत्वन्निवर्त्तयति। तदा "प्राणापानौ नादविन्दू जीवात्मपरमात्मनोः।मिलित्वा घटते यस्मात् तस्माद्वै घट उच्यते" इतियोगशास्त्रलक्षितायां घटावस्थायां समाहितस्थितिः परिचीयते। अत्र घटावस्थायां जीवात्मपरमात्ममेलनस्य घटनैव पूर्व्वसूचनामात्रमेवेतिवेदितव्यम्। अत्र स्मृतौ जीवात्मपरमात्मनोरित्यस्याग्रे ऐक्यायेतियोजनीयम्। अन्यथा जीवात्मपरमात्मैक्यदृढ़निष्पत्तिस्वीकारे परिचयनिष्पत्यवस्थावैयर्थ्यं प्रसज्येत। यद्वा निरूक्तारम्भावस्थायामेव "अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे" इतिभगवद्वाक्यानुसारेण पूरकरेचकयोरावर्त्तमानयोर्हन्सः सोहमित्यनुलोमतः प्रत्यनुलोमतश्च अभिव्यज्यमानेन अजपामन्त्रेण तत्त्वम्पदार्थैक्यम् व्यतिहारेण साधकैर्भाव्यते। स्वरूपस्य कालान्तर्भाविनी अद्वयावस्था परिचीयत इतिवेदितव्यम्। यद्यपि अजपा विद्या नामात्ममन्त्रःसर्व्वैरेव मनुष्यै षट्शताधिकैकविंशतिसहस्रसंख्यया प्रत्यहोरात्रं जप्यते। तथापि तदभिव्यक्तिः अनुसंदधानानां साधकानामेव भवति नेतरेषामितिवैषम्यं वेदितव्यम्। सोहमित्याकारसम्पत्यनन्तरम् प्रणवाभिव्यक्तौ सत्यां "कूटस्थं यत्तदक्षरम्" "क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिस्मरणात् एकाक्षरप्रणवप्रतिपादान्तर्वर्त्तिविश्ववैश्वानररूपाकारलक्षितं प्रथमं चैतन्यं, तैजसहिरण्यगर्भरूपोकारलक्षितं द्वितीयं चैतन्यं,प्राज्ञाव्याकृतरूपमकार-

लक्षितं तृतीयञ्चैतन्यं, शुद्धचिदद्वयार्धमात्रालक्षितं चतुर्थं चैतन्यं, "शिवं शान्तञ्चतुर्थं मन्यन्ते" इति श्रुतिलक्षितं स्वरूपं परिचीयत इति-वेदितव्यम्। अत्रापि घटावस्थैव वेदितव्या। नाग्रिमावस्था नासम्प्रज्ञातसमाधिरित्यर्थः। तथा च स्मर्य्यते "पूर्व्वं समाधेरखिलम्विचिन्तयेत्ॐकारमात्रं सचराचरञ्जगत्। तदेव वाच्यम्प्रणवो हि वाचको-विभाव्यतेऽज्ञानवशान्न बोधतः। अकारसंज्ञः पुरुषोहि विश्वकोह्युकारकस्तैजस ईर्य्यते क्रमात्। प्राज्ञोमकारः परिपठ्यते खिलैः समाधिपूर्व्वन्नतु तत्त्वतोभवेत्। विश्वं त्वकारं पुरुषं विलापयेदुकारमध्ये बहुधा व्यवस्थितम्। ततोमकारे प्रविलाप्य तैजसं द्वितीयवर्णम्प्रणवस्य चान्तिमम्। मकारमप्यात्मनि चिद्घने परे पिलापयेत्प्राज्ञमपीह कारणम्" इति। अत्र निरूक्तस्मृतौ पूर्व्वं समाधेरखिलम्विचिन्तयेद्दित्यत्र समाधिशब्देन असम्प्रज्ञातसमाधिर्वेदितव्यः। असम्प्रज्ञातसमाधौ विचिन्तयेदिति क्रियानुपपत्तेश्चित्तवृत्तिनिरोधात् विश्वादिभिरित्युक्तचैतन्यैरनुक्ता वैश्वानरादयोपि चैतन्यात्मानोगृह्यन्ते। तथाश्रुतिस्मृतिप्रसिद्धेः तेषामवस्थासाहचर्य्याच्च। ननु हंसइत्याकारसम्पत्तौ तद्रूपेण तदभिव्यक्तावित्यर्थः। सोहमित्याकारसम्पत्तौ च प्रणवाभिव्यक्तौ च जीवात्मपरमात्मनोरैक्यव्यञ्जनात्। कथन्न तन्निष्पत्तिः कथञ्चात्र प्रणवाभिव्यक्तावपि अक्षरब्रह्मभावनावसरे ऐक्यस्य घटना सूचनामात्रमभ्युपगम्यते। तत्रोच्यते यथा लोके कश्चित् भूमिभुजामग्रणीः शौर्य्यादिसम्पन्नोदुर्द्दैवयोगात् कामान्धीकृतोवेश्यादिवशीभूतोऽविदितादित्योदयास्तमनोविस्मृतराजकार्य्यः अनवलोकितप्रकृतिः शत्रुहृताखिलसम्पत्तिः प्राप्तविपत्तिश्च नितरां क्लिश्यमानः पुनःप्राक्तनपुण्यपुञ्जोदये केनचिदनुस्मारितस्वरूपः राजाहं शूरोहमित्यात्मनोराज्यं शौर्य्यञ्च अनुस्मरति। तत्र न तदानीमसौ स्वकीयराजपदभाक् भवति। किन्तु स्वस्य प्राक्तनराज्यपदमनुसन्दधानोभवति। पुनश्च कृतप्रयत्नः सञ्चितसेनादिशक्तिः शौर्य्येण कालान्तरे तत्पदमश्नुते एवमत्रापि पुरुषः अविद्यावशीकृतः विस्मृतात्मसच्चिदानन्दस्वरूपः संसारी गुरुमुखानुऽस्मारितस्वरूपः स्वस्य आनन्दादिरूपं ब्रह्माभिन्नस्वरूपस्वाराज्यं अनुसन्धत्ते। पुनः कृताभ्यासादिप्रयत्नः प्राप्तप्राथमिकनानाभूमिकः ततः कृतात्मसाक्षात्कारः निष्पत्त्यवस्थायां ब्रह्मत्वमश्नुत इतिवेदितव्यम्। घटावस्थायां प्रणवाभिव्यक्तिः ततो महावाक्यादिस्फुरणञ्च भाविजीवपरमात्मसमागममैक्यरूपं सूचयति इतिवे-

दितव्यम्। यथा वामाक्षिबाहूवादिस्पन्दनम् काकवचनञ्च पत्नीपति-समागमम्, तत्र तत्र देहल्यादौ स्थितम् पूर्णघटादिकेदलीपूगपुञ्जादि-सुगन्धितजलसुमनःसक्सुवेषभटादिपरिष्कृतराजपथादिप्रजा प्रजाधि-पसमागमं सूचयन्तीतिवेदितव्यम् । घटावस्थायामन्तर्नाड्यामपानः प्रविशति चक्राणि भिद्यन्ते। नादा आविर्भवन्ति। तथा च स्मर्य्यते योग-शास्त्रे "क्षितिं भित्वोर्ध्वगापानक्षोभिता स्याद्यदोरगी । तदा नादोत्प-त्तिरस्य जायते योगिनोहृदि। मृदङ्गनादोत्पत्तिस्तु मणिपूरभिदा भवेत्। अनाहतविभेदेन घण्टाध्वनिरूदेति च। विशुद्धचक्रभेदेन यन्त्रनादःप्रजा-यते" श्रूयते च हंसोपनिषदि "नादोदशविधोजायते चिणीतिप्रथमम् चिञ्चिणी तु द्वितीयकम् घण्टानादस्तृतीयः शंखनादश्चतुर्थः पञ्चम-स्तन्त्रीनादः षष्ठस्तालनादः सप्तमोवेणुनादः अष्टमोमृदङ्गनादः नव-मोभेरीनादः दशमोमेघनादः" इति विशुद्धचक्रे भिन्ने सति सत्यां च तत्र नादाभिव्यक्तौ परिचयावस्था वेदितव्या। यथास्मर्य्यते योगशास्त्रे "ततः परिचयावस्था योगिनोभ्यासतोभवेत् । यदा वायुश्चन्द्रसूर्य्यौ त्यक्त्वा तिष्ठति निश्चलः । यदा परिचितो वायुः सुषुम्ना व्योम्नि सञ्चरेत्। क्रियाशक्ति गृहीत्वैव चक्रं भित्वा सुनिश्चितम्। यदा परि-चयावस्था भवेदभ्यासयोगतः । त्रिकूटं कर्म्मणां योगी तदा पश्यति-निश्चितम् । तृतीयायान्तु विज्ञेयोविहायोमर्द्दलध्वनिः। महाशून्यं तदा याति सर्व्वसिद्धिसमाश्रयम् । चित्तानन्दन्तदा जित्वा सहजानन्दस-म्भवः" इत्यादि । अत्र परिचयावस्थायां "चित्तानन्दन्तदा जित्वा सह-जानन्दसम्भवः" इतिस्मरणात् स्वरूपस्य नादविषयकान्तःकरणवृ-त्तिजन्यसुखमनपेक्ष्य निरस्येति वा स्वाभाविकात्मसुखावस्थितिः परि-चीयत इतिवेदितव्यम्। ननु सोहमित्याकारसम्पत्तौ जीवेन ईश्वरस्या-परोक्षत्वलाभे "प्राणापानौ" इत्युपक्रम्य "घटते यस्मात्" इत्युपसं-हृतायां घटावस्थाप्रतिपादिकायां स्मृतौ 'घटते' इतिवर्त्तमानकालिक प्रयोगदर्शनात् जीवात्मपरमात्ममेलनस्य तत्रैव दशायामुपस्थितिरूप-पद्यते । तत्कथमुच्यते तत्र तन्मेलनस्य घटनैव पूर्व्वसूचना मात्रमेवेति तत्रोच्यते "वर्त्तमानसमीप्ये लट्" इतिपाणिनेः 'घटते' इत्यत्र वर्त्तमानकालिकलटः भाविना उत्तरकालिकनिष्पत्यवस्थावर्त्तिना परमानन्दरूपेण जीवात्मपरमात्ममेलनेन तदैक्येनेतिभावः सम्बन्धोवेदि-तव्यः। "द्वितीयायां घटीकृत्य वायुर्भवति मध्यगः। दृढ़ाऽऽसने भवेद्योगी ज्ञानी देवसमस्तदा । विष्णुग्रन्थेस्तदा भेदात् परमानन्दसूचकः।

अतिशून्ये विमर्दश्च भेरीशब्दस्तदा भवेत्" अत्र स्मृतौ परमानन्दसूचक इत्यभिधानात् अस्यामवस्थायां परमानन्दरूपजीवात्मपरमात्मैक्यस्य ब्रह्मस्वरूपस्येतिभावः। सूचनामात्रत्वम्पूर्व्वनिरुक्तमुपपन्नम्भवति। घटावस्थापरिचयावस्थयोः क्रमः प्रदर्श्यते "यदा भवेद् घटावस्था पवनाभ्यासतः परा" इत्यादिस्मरणात् "ततः परिचयावस्था योगिनोभ्यासतो-भवेत् " इत्यादिस्मरणाच्च। एतावता उक्तम्भवति साधकस्य सम्यगभ्यासतः अनिर्वचनीयचिरकालसम्पादितप्राक्तनेदानीन्तनपुण्यपुञ्जोदयात् मूलाधारात् निजावासात् अपानवायुः स्वभावादधोगतिकः अभ्यासादूर्ध्वगतिको भूतः उत्थितः सन् प्रसभेन कोशगतरम्भाकोमलदलनिस्सरणमिव ऊर्ध्वाभिमुखमभिसरन् चक्राणि भेदयन् प्रणवध्वनिमभिव्यञ्जयन् भीतिमधीरताञ्च जनयन् जड़तामुपरतिस्थितिमिति-यावत् प्रकटयन् कुम्भकनिष्पत्ति सम्पादयन् ब्रह्मपुरिमूर्ध्नि इत्यर्थः। लीयते निर्व्यापारस्थितिं समीहते तदानीं युगपदेव प्रथमसमागमसुखं भीतिमधीतिमधीरताञ्च वनिता इव साधकबुद्धिवधूः प्रकृतिपदवाच्या स्वरूपसंस्पर्शजन्यशान्त्यादिसुखम्भीतिमधीरताञ्च गच्छति। तत्र भीतेरधीरतायाश्च हेतुः अपरिचितवस्तूपलब्धिरेव प्रायोबुद्धिस्वभावः अपरिचितवस्त्वसहिष्णुता तथा दृश्यते लोके शिशुरपरिचितजनेन लालितोऽपि रोरूयते हसति च स एव पुनःपरिचितजनाङ्कसंस्थितः। तथा स्मर्य्यतेपि कपिलगीतायाम् "प्राप्तकाले च विप्रर्षे मानसम्भयमाप्नुयात्। तत्सर्व्वं कथयिष्यामि सावधानं शृणुष्व च स्त्रीणामादौ यथाभीतिः पुरुषस्यादिसङ्गमे। तथाऽऽसाञ्चित्तविक्षेपःप्राप्तानां स्वामिमन्दिरम्। पुरुषस्याल्पसङ्गेन गतायाता तु सोच्यते। लज्जाभीती यदा नष्टे तस्याः सुश्लिष्टता च सा। पुरुषन्तु वशीकृत्य गृहणी गृहमुच्यते। तदा सुलीनता प्रोक्ता सर्व्वसिद्धिविधायिनी। शरीरं भवनं यस्य हृदयं रतिमन्दिरम्। आत्मा च पुरुषः प्रोक्तो मानसं प्रकृतिस्तथा। विक्षेपता गतायाता सुश्लिष्टता सुलीनता। एवं हि प्रोच्यते सद्भिर्भूमिकानाम् चतुष्ठयम् "इति। अत्र प्रसङ्गप्राप्तं मानसभूमिकाचतुष्टयमभिहितम् वेदितव्यम्। ततः यथा यथा वायुप्रवेशात् यद्यच्चक्रं भिद्यते तथा तथा तत्तच्चक्रे नादोभिव्यज्यते आज्ञाचक्रे भिन्ने सति सत्यां च तत्र वैणवक्वणद्वीणानादाभिव्यक्तौ निष्पत्यवस्था वेदितव्या। तथा स्मर्य्यते योगशास्त्रे "रुद्रग्रन्थिं यदा भित्वा शर्व्वपीठगतोऽनिलः। निष्पत्तौ वैणवः शब्दः क्वणद्वीणाक्वणोभवेत्। एकीभूतन्तदा

चित्तं राजयोगाभिधानकम्" इति। अस्यां निष्पत्यवस्थायां विषय विषयिणोरभेदोपचारात् चित्तचितोरैक्यमुपतिष्ठते। त्रिपुटीलयात् अन्तःकरणं ध्येयाकारेणैव परिणमत इत्यर्थः। "एकीभूतस्तदा चित्तं" इति स्मरणात् चित्तस्य आत्मना सह ऐक्यावगमात् जले सैन्धवखिल्यवत् तस्य तत्र लयादित्यर्थः। जीवस्य उपाधिभूत स्यान्तःकरणस्य लयोपपत्तौ दर्पणव्यतिरेकिमुखप्रतिबिम्बस्य मुखबिम्बत्ववत् जीवस्य ब्रह्मत्वन्निष्पन्नं भवति स्वरूपस्य अमृतरूपा। निष्पन्नाद्वयावस्थितिः परीचीयत इतिवेदितव्यम्। तथा च स्मर्यते योगशास्त्रे "ततोऽभ्यासक्रमेणैव निष्पत्तिर्योगिनोभवेत्। अनादिकर्म्मबीजानि येन तीर्त्वाऽमृतम्पिवेत्" अत्र अमृतम्पिवेदित्यभिधानेन मुक्तिरसं वेद्यम्। अनुभवेन निरतिशयसुखात्मकोभावोपर्य्यवसितो वेदितव्यः। अत्रैव अनादिकर्म्मबीजानि तीर्त्वा इत्यभिधानेन कर्म्मक्षयसत्त्वव्यञ्जनात् सुधारूपामृतपानसुखभोगानुपपत्तेः निर्विकल्पकसमाधिरूपनिर्व्यापारस्थितौ अमृतपानरूपव्यापारायोगाच्च एवमुक्तप्रकारेण परिचयावस्थापर्य्यन्तम् चित्तवृत्तिसद्भावात् सम्प्रज्ञातयोगोवेदितव्यः। निष्पत्यवस्थामान्तु चित्तवृत्तिलयात् असम्प्रज्ञातयोगोवेदितव्यः। अयमेव जीवब्रह्मैक्यभावरूपश्चतुर्थयोगो राजयोगपदवाच्यो वेदितव्यः। अत्र द्विधाभावो न भवति ऐक्यमेव विद्योतते तथा चस्मर्य्यते योगशास्त्रे "मन्त्रयोगोहठश्चैव लययोगस्तृतीयकः। चतुर्थोराजयोगः स्यात् सद्द्विधा भाववर्जितः" इति। अत्रस्वरूपपरिचयात्मकोयोगः राजयोगपदवाच्यः संक्षेपेणैव व्याख्यातः ग्रन्थक्रमेण पौनःपुन्येन व्याख्यास्यत इतिवेदितव्यम्।

## तत्साधनेऽपि तच्छब्दः २।१।२।

तस्य निर्दिष्टस्य साधने तत्साधने यमनियमासनप्राणायामादिरूपेऽपि तच्छब्दः योगशब्दः अत्र प्रयुज्यते इतियोजनीयम् यथा लोके प्राणधारणरूपजीवनसाधनेऽपि कृषिवाणिज्यादौ क्षेत्रमूलधनादौ वा जीवनशब्दः प्रयुज्यते।

## मनोदृष्टिभ्यामविमुक्तसेवनम् तच्छ्लेषः २।१।३।

मनश्च दृष्टिश्च मनोदृष्टी ताभ्याम्मनोदृष्टिभ्यां युगपदेव मनसा दृष्ट्या चेतिभावः अविमुक्तस्य भ्रूमध्यस्थानस्य सेवनम् मनोयोगिन्या

दृष्टया दर्शनमित्यर्थः।तच्छेषः तस्य योगस्य शेषः अङ्गमितियावत्"स्पर्शान् कृत्वा बहिर्बाह्यान् चक्षुश्चैवान्तरे भ्रुवोः" इत्यादि भगवद्वाक्यम्प्रकृतम्प्रमापयति चक्षुश्चैवान्तरे भ्रुवोरित्यभिधानेन भ्रूमध्यस्य दृष्टयावलोकनम् स्पष्टमभिधीयते। स्पर्शान् कृत्वा बहिर्बाह्यान् इत्यभिधानेन च बाह्यविषयैर्मनसः असम्बन्धो व्यज्यते। तेन च भ्रूमध्ये सम्बन्धस्तच्चिन्तनमितियावत् व्यज्यते इति वेदितव्यम्। ननु अविमुक्तशब्दो वाराणस्याम्प्रसिद्धः स कथम् भ्रूमध्यस्थानेऽत्र व्यपदिश्यते। तत्रोच्यते शिवेन न विमुच्यत इति अविमुक्तप्रदेशो व्यपदिश्यते। स च प्रदेशः वाराणसीपदवाच्यो भवति। तत्र च वरणा-नासीनद्योः सङ्गमः प्रसिद्धः नासी एव क्वचित् असीशब्देन प्रसिध्यति निरुक्तधर्म्मविशिष्टः भ्रूमध्यप्रदेशो विश्रूयते आमनन्ति चैनम्परमेश्वरमस्मिन् अविमुक्ते यावालाः "एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति सो ह्यविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नास्यांच मध्ये प्रतिष्ठित इति का वै वरणा का च नासीति। तत्र चेमामेव वरणा नासीति निरुच्य सर्व्वाणीन्द्रियकृतानि पापानि वारयति सा वरणा सर्व्वाणीन्द्रियकृतानि पापानि नाशयति सा नासीति पुनरामनन्ति "कतरच्चास्य स्थानम्भवतीति भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्युलोकस्य परस्य च सन्धिर्भवति इति"। तथा स्मर्य्यतेपि "आज्ञापङ्कजदक्षांशात् वामनासापुटङ्गता। उदक्वहेति तत्रेड़ा गङ्गेतिसमुदाहृता। ततोद्वयमिहस्थाने वाराणस्यान्तु चिन्तयेत्। तदाकारा पिङ्गलापि तदाज्ञाकमलोत्तरे। दक्षनासा पुटे याति प्रोक्ता स्माभिरसीतिवै"इति भ्रूमध्यसेवनमेव खेचरी मुद्रा निरुच्यते योगशास्त्रे "भ्रुवोर्मध्ये शिवस्थानं मनस्तत्र विलीयते। ज्ञातव्यन्तत्पदन्तुर्य्यं तत्र कालो न विद्यते। अभ्यसेत्खेचरीन्तावत यावत्स्याद्योगनिद्रितः। सम्प्राप्तयोगनिद्रस्य कालोनास्ति कदाचन" इति। अस्याश्च सर्व्वमुद्राभ्य औत्कृष्ट्य स्मर्य्यते योगशास्त्रे "न खेचरी समा मुद्रा" इत्यादि। अपि चोक्तम् योगशास्त्रे "यावद्वीक्षेत्भ्रुवोर्मध्ये तावत्कालभयङ्कुतः" इति। अत्र अपरःप्रतिपादनीयोर्थो भूमिकादिरूपः स्वयमेव श्रीमता सूत्रकारेण वक्ष्यतेअतोऽत्र नाभ्यधायीतिवेदितव्यम्। २।१।३

## तद्वदन्येषामपि बाह्याभ्यन्तराणाम्वा २।१।४।

तद्वत् अविमुक्तसेवनवत् अन्येषां भ्रूमध्यादितरेषां बाह्याभ्यन्तराणाम् बाह्यानां चन्द्रसूर्य्यदीनाम् आभ्यन्तराणां नाभिचक्रहृदयपुण्ड-

रीकजिह्वाग्रादीनाम् अत्र सेवनमितियोजनीयम्। वा शब्दो वैकल्पिको वेदितव्यः। भ्रूमध्यसेवनं मुख्यविधेयम्। तदयोग्यतायाम् निरुक्तानां सेवनम् अमुख्यविधेयम्वेदितव्यम्। अन्तर्दृष्ट्या मूलाधाराद्याभ्यन्तर प्रदेशावलोकनम् बहिर्दृष्ट्या निमेषोन्मेषवर्जितया बाह्यप्रदेशसम्बन्धः शाम्भवी मुद्रा वेदितव्या। तथाच स्मर्य्यते योगशास्त्रे "अन्तर्लक्ष्यविलीनचित्तपवनो योगी यदा वर्त्तते। दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि। मुद्रेयं खलु शाम्भवीभवति सा लब्धाप्रसादाद्गुरोः। शून्याशून्यविलक्षणं स्फुरति तत् तत्त्वं परं शाम्भवम्। अन्तर्लक्ष्यमनन्य धीरविरतम् पश्यन्मुदा संयमी। दृष्ट्युन्मेषनिमेषवर्जितमियं मुद्रा भवेच्छाम्भवी। गुप्तेयं गिरिशेन तन्त्रविदुषा तन्त्रेषु तत्त्वार्थिनामेषा स्याद्यमिनाम्मनोलयकरी मुक्तिप्रदा दुर्ल्लभा" इत्यादि नासिकाग्रावलोकनं उन्मनीमुद्रा वेदितव्या। तथा स्मर्य्यते योगशास्त्रे "अर्धोन्मीलितलोचनः स्थिरमना नासाग्रदत्तेक्षणश्चन्द्रार्कावपि लीनतामुपनयन्निस्पन्दभावेन यः। ज्योतीरूपमशेषबीजमखिलं देदीप्यमानम्परन्तत्त्वन्तत्पदमेति वस्तु परमम्वाच्यङ्किमत्राधिकम्" इत्यादि। अत्र नासाग्रेत्यभिधानात् नासिकाग्रसेवनाशक्तौ नासिकाग्राभिमुखम् द्वादशाङ्गुलपर्य्यन्ताम्बरप्रदेशः सेवनीयोवेदितव्यः। तथाहि वशिष्ठः "द्वादशाङ्गुलपर्य्यन्ते नासाग्रे विमलेऽम्बरे। सम्विद्दृशोः प्रशाम्यन्त्योः प्राणस्पन्दो निरुध्यते" इति। उक्तञ्च भगवद्गीतायाम् "सम्प्रेक्ष्य नाशिकाग्रं स्वं दिशश्चानवलोकयन्" इति। चन्द्रसूर्य्यादीनां मनोदृष्टिभ्यां सेवनात् अवान्तरफलं प्रतिपाद्यते पातञ्जलयोगशास्त्रे "चन्द्रे ताराव्यूहज्ञानम्" "भुवनज्ञानं सूर्य्ये संयमात्" इत्यादि। अत्र संयमशब्दात् ध्यानमभिधीयते ध्यानचिन्तनयोः पर्याय त्वम् शब्दशास्त्रप्रसिद्धम् चित्तमनसोरेकत्वविवक्षया निरुक्तसूत्रोक्तस्य मनोदृग्भ्यां तत्र तत्र सेवनस्य मनोव्यापाररूपत्वात् ध्यानत्वमुपपद्यते। निरुक्तसेवनस्य मुख्यफलन्तु योगनिष्पादननिमित्तीभूतमनस्स्थैर्यम्वेदितव्यम्। स्मर्यते च योगशास्त्रे "यत्र दृष्टिर्लयस्तत्र" इति एतदुक्तम्भवति दृष्टिस्थैर्यान्मनोलीयते "लयोविषयविस्मृतिः" इतियोगशास्त्रात् विषयविस्मृतिमन्मनोभवति दृश्याकारेण स्थितम् स्थिरम्भवतीत्यर्थः। यद्यपि "निरीक्षेन्निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः। अश्रुसम्पातपर्यन्तमाचार्य्यैस्त्राटकं स्मृतम्" इत्यादियोगशास्त्रात् सूक्ष्मलक्ष्ये दृष्टिस्थिरीकरणम् त्राटकमभिधीयते तदेवात्र सूत्रद्वयेनापि विधीयते। तथापि नात्रत्यसूत्रनिरुक्तसाधनं त्राटकपदवाच्यं स्यात्। त्रा-

टके मनोयोगनियमाभावात् तादृगभ्यासासत्त्वे तादृक्फलानुपपत्तेश्च। स्मर्य्यतेपि त्राटकस्य निरुक्तसाधनफलात् विसदृशम्फलम् "मोचनं नेत्ररोगाणां तन्द्रादीनाङ्कपाटकम्" इत्यादियोगशात्रात्। ननु दृष्टिस्थिरीकरणेनैव मनःस्थिरीकरणत्वमुपपद्यते "यत्रदृष्टिर्लयस्तत्र" इतियौगिकाभिधानात्। तर्हि कथमत्र विसदृशम्फलमभ्युपगम्यते। तत्रोच्यते अश्रुसम्पातपर्य्यन्तमिति योगशास्त्रीयनियमनात् त्राटके अश्रूणां सम्यक् पतनपर्य्यन्तैव निरीक्षणस्याविधिरुच्यते। निरुक्ताविमुक्तादिसेवने तु "अभ्यसेत्खेचरीं तावत् यावत्स्यात् योगनिन्द्रितः" "सर्व्वदा पूजयेल्लिङ्गं दिवारात्रिनिरोधितः" इत्यादियोगशास्त्राभिधानात् दीर्घकालभाविनिद्रावधि निरवधित्वादिस्मरणात् अभ्यासवैषम्यात् फलवैषम्यमुपपन्नमितिवेदितव्यम्। "सर्व्वदा पूजयेल्लिङ्गं दिवारात्रिनिरोधितः" अत्रस्मृतौ "एतस्मादात्मन आकाशः सम्भूतः" इत्यादिश्रुतेः सर्व्वकारणमात्मा लिङ्गशब्देनाभिधीयते पूजयेत् इतिशब्देन ध्यायेदित्यर्थोवेदितव्यः। यतो ध्यानमेवात्मपूजनम्। तदुक्तं योगवाशिष्ठे "ध्यानोपहार एवात्मा ध्यानमस्य महार्चनम्। विना तेनेतरेणायमात्मा लभ्यत एवनो" इति। दिवारात्रि निरोधतः इति शब्देन सूर्य्यचन्द्रौ अर्थात् सूर्य्यचन्द्रपदवाच्येड़ापिङ्गलानाड्यौ निरुध्येदित्यर्थोवेदितव्यः। चन्द्रसूर्य्यसञ्चारे चन्द्रसूर्य्यनाड़ीगतवायुस्पन्दे चित्तस्थैर्य्याभावात् "चले वाते चलञ्चित्तम्" इत्युक्तत्वात् "सुषुम्नान्तर्गते वायौ मनस्थैर्य्यं प्रजायते" इत्युक्तत्वाच्च। निरोधतः अत्र ल्यब्लोपे पञ्चमी तस्यास्तसिल्। यथा अविमुक्तसेवनम् तच्छेषः योगाङ्गम् तथा अन्येषाम्बाह्याभ्यन्तराणां सेवनम् तच्छेषः तदङ्गम्वेदितव्यम्। एवमन्यत्रापि वक्ष्यमाणसाधनेषु तच्छेषत्त्वमूह्यम् मुमुक्षुभिः साधकैः। ननु द्वितीयाध्यायस्थ प्रथमपादस्थतृतीय चतुर्थसूत्रयोः मनोयोगिन्या दृष्ट्या निरीक्षणस्थले दर्शनावलोकनादिशब्दमनादृत्य स्पष्टं योजनया च कथं सेवनशब्दः स्वीकृतः। तत्रोच्यते यथालोके सेवनम् कालक्रमाप्रमादगाम्भीर्य्य धैर्य प्रोत्साहानिर्व्वेदानुकूलाचरणादिभिः फलति सेवकाय अभिमतार्थम्प्रापयति। तथेदम् मनोदृग्भ्यान्निरीक्षणमपि सेवनवत् तैरेव निरुक्तैः कालक्रमादिभिः साधकाय सिद्धिं गमयतीत्याशयेन श्रीमता सूत्रकारेणात्र दर्शनादिशब्दमनपेक्ष्य सेवनशब्दोऽपेक्षित इतिवेदितव्यम्। २।१।४

श्रीमान् सूत्रकारः दृष्टिसाधनाभ्यासमभिधाय अग्रिमसूत्रेण पवनसाधनाभ्यासं सूत्रयति ॥



## प्राणापानयोरन्योन्यस्थितिविनिमये-नात्ममन्त्राभ्यासश्च २।१।५।

प्राण ऊर्ध्वगतिको वायु अपानोऽधोगतिकोवायुश्च प्राणापानौ तयोस्तथाभूतयोः अन्योन्यस्थितिविनिमयेन परस्परम् ऊर्ध्वाधोगतिरूपमर्य्यादापरिवर्त्तनेन हमितिरूपस्य श्वासात्मकस्य प्राणस्य अधोगत्या मूलाधारस्थितापाने प्रापणेन अपानस्य च प्राणवायुताड़ितस्य सविसर्गसकाररूपस्य स्वनिवासस्थानहृदयादारभ्य नासिकाग्रद्वादशाङ्गुलपर्य्यान्ताम्बरवर्त्तिनि प्राणे प्रापणेन पूरकरेचकयोरावर्त्तनेनेतियावत् आत्ममन्त्रस्य अजपाख्यगायत्र्या हंस इत्यस्येतियावत् अभ्यासः पौनःपुन्येन निरन्तरासकृदावृत्तिः। चकारः पुनरर्थकमव्ययम्। अत्र तच्छेष इतियोजनीयम्। यद्वा प्राणापानयोः हृदयगुदस्थयोः अन्योन्यस्थितिविनिमयेन परस्परं प्राणस्य अपानसंयोगेन गुदस्थितिसम्पादनेन अपानस्य च प्राणसंयोगेन हृदयस्थितिसम्पादनेन उभयोरितरेतरस्थितिपरिवर्त्तनेनेतिभावः अवशिष्टांशः पूर्व्ववद्व्याख्येयः। उक्तञ्च भगवद्गीतायाम् "अपाने जुह्वति प्राणम्प्राणेऽपानन्तथापरे" स्मृतञ्च योगशास्त्रे "सकारेण बहिर्याति हकारेण विशेत् पुनः। प्राणस्तत्र स एवाहं हंस इत्यनुचिन्तयेत्" इति हंस इतिमन्त्रः पूर्व्वंव्याख्यातःपुनरपि व्याख्येयांशे व्याख्यायते उत्तरगीतायाम् "हंसत्वम्पारदर्शनम्" इतिनिर्द्दिशति भगवान् श्रीकृष्णचन्द्रः। अत्र हंसत्वं हंसस्वपरम्वेदितव्यम् अत्रैव "हंसोहंसाक्षरश्चैतत्" इत्यभिधानात् हंसत्वं हंस इति मन्त्रधर्म्मः स्वभाव इतियावत् पारदर्शनम् संसारपारावलोकनम्। पारस्य दर्शनं येन इति पारदर्शनम्। अयमेव मन्त्रः संसारपारं दर्शयति संसारसमुद्रात्तारयतीत्यर्थोवेदितव्यः। यथा हंसः पक्षी पानीयैक्यसमापन्नम्पयो विवेचयति पानीयात्पृथक्कृत्य पिवति। तथायमपि हंसो मन्त्रः प्रकृतिसंश्लिष्टम्पुरुषम्विवेचयति ततः पृथक्कृत्य ज्ञापयति। यथा प्रणवो मन्त्रः "ॐमित्येकाक्षरम्ब्रह्म" इत्यभिधानात् ब्रह्मरूपोऽभ्युपगम्यते। तथायं हंसोमन्त्रः "प्राणस्तत्र स एवाहं हंस इत्यनुचिन्तयेत्" इत्यभिधानात् अहम्पदलक्षितोजीवरूपोवेदितव्यः। "अहम्ब्रह्मास्मि" इत्यत्र श्रुतौ अहम्पदेन जीवोलक्ष्यते स च हंस इत्यक्षरद्वितयी अक्षरद्वयरूपपक्षद्वयविशिष्टः पक्षिरूपो वेदितव्यः। तथाच स्मर्यते "हंसरूपा कामकला तत्स्वरूपं निगद्यते। हकारेण बहिर्याति सकारेण विशेत्पुनः। हकारस्य

सकारस्य लोपे कामकला भवेत् । पक्षद्वयेन रहितो हंसः कामकला भवेत्। सोहमेतस्य देवेशि! रूपंकामकलाभिधम्।सोहमित्यस्यदेवेशि!प्रणवः परिनिष्ठतः। जीवपक्षद्वयत्यागात् प्रणवः परिकीर्त्तितः" इति । अपिच स्मर्यते आत्मनः पक्षिरूपत्वमुत्तरगीतायाम् "यावत्पश्येत्खगाकारन्तदाकारम्विचिन्तयेत्" इति । एवं सति ब्रह्मरूपप्रणवाभिव्यक्तौ हंस इत्यस्यैव सोपानरूपेण प्रयोजकत्वमुपपद्यते । ततः पारदर्शनमित्यत्र पारावलोकनमितिव्याख्यानं युज्यते । स्मर्यते च हंसइत्यनुचिन्तयतोऽभ्यासशालिनः निरुक्तप्रकारेण संसारनिवर्त्तकज्ञानोत्पत्तिः "एवमभ्यसतः पुंसः संसारध्वान्तनाशनम् । ज्ञानमुत्पद्यते सर्व्वम् हंसक्षपणमव्ययम्" अत्र हंसक्षपणम्पदं हंसस्वरूपापहम् जीवदशानिवर्त्तकम् इतिव्याख्येयम् । व्याख्यातञ्च "हंसत्वम्पारदर्शनम्" इतिश्रीमद्भिर्गुरुवरैः उत्तरगीताव्याख्यायाम् । "तथाहि पारदर्शनम् यावत् तावद्धंसत्त्वम् नाम हंसपदाभिध्येयत्वम् शरीरविशिष्टजीवत्वमितिवेदितव्यम् । यथा यावच्छरीरित्वं शिवविद्यादीनामपि तत्सत्वात् नाम शरीरनिरूपितजीवत्वसत्वादपि नित्यशुद्धबुद्धत्वरूपात् नेश्वरत्वं हीयते । एवं जीवन्मुक्तस्यापि शरीरिणः ऐश्वर्य्यवतो नेश्वरत्वहानिरिति । अत एतदुक्तम्भवति पारदर्शनावधिकं जीवत्वम् । एतदनन्तरम् शरीरसत्तायामपि न जीवत्वम् किन्तु ब्रह्मत्वमेवेतिवेदितव्यम् । तथाच श्रूयते "ब्रह्मविद् ब्रह्मैव भवति" इति । तथा च व्याख्यातः हंसः शब्दः श्रीमद्भिर्गुरुवरैः उत्तरगीताव्याख्यायाम् "हन्ति अविद्यां हंसः हंसशब्दस्यौणादिकसप्रत्ययेन निष्पन्नत्वादिति । अभ्यासकाले प्रथमं यत्नतः श्वासप्रश्वासानुसारेण ध्वन्यात्मको हंस इति मन्त्रोजप्योऽनुचिन्तनीयोवेदितव्यः । तत्र पूरककाले पूरकारम्भकालात्प्रागित्यर्थः गुदाकुञ्चनरूपमूलबन्धोविधेयः । अपानमूर्ध्वगत्या अन्तर्नाड्याम्प्रवेशयितुम् कुण्डलनीशक्तिञ्चालयितुम् सार्धत्रिवलयाकाररूपमण्डलीभूतसर्पाकारात् ऋज्वीकर्त्तुम् दण्डाकारतामापादयितुमितिभावः सुप्तामुत्थापयितुमित्यर्थः । मोक्षद्वारम्विभेदयितुञ्च । तथा च स्मर्यते योगशास्त्रे "पार्ष्णिभागेन सम्पीड्य योनिमाकुंचयेद्गुदम् । अपानमूर्ध्वमाकृष्य मूलबन्धोऽभिधीयते। अधोगतिमपानं च ऊर्ध्वगङ्कुरुते बलात्। आकुञ्चनेन तम्प्राहुर्मूलबन्धं हि योगिनः। प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम्। गत्वा योगस्य संसिद्धिं यच्छतोनात्र संशयः। तेन कुण्डलनीसुप्ता निःश्वस्य ऋजुतां व्रजेत्। उद्घाटयेत्कपाटन्तु यथाकुञ्चिकयाहठात्। कुण्डलिन्या तथायोगी मोक्षद्वार-

म्विभेदयेत्। येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम्। मुखमाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी" इत्यादि पूरकान्ते पूरकान्तिमावयवभूतावसानकालिकस्थिताविति भावः। कण्ठसंकोचनरूपजालन्धरबन्धोविधेयः वायुप्रकोपनिवारणाय अन्तर्नाड्यतिरिक्तनाड्यन्तरे वायुगमननिरोधायेतियावत् कण्ठामयप्रणाशाय सूर्यमुखवंचनाय जठरानले पीयूषप्रपातनिरोधात् जिह्वया तद्रसास्वादनायेतियावत् इड़ापिङ्गलानाड़ीद्वयस्तम्भनाय षोड़शाधारबन्धनाय अधोगामिनो नभसः कपालकुहरस्येतियावत् जलस्य चन्द्रच्युतामृतरसस्येतियावत् बन्धनाय सूर्याभिमुखमार्गनिरोधपूर्वकमामाशयमार्गप्रापणायेतिभाव। तथाच स्मर्यते "पूरकान्ते तु कर्त्तव्यो बन्धोजालन्धराभिधः" इतिपूरकान्ते त्वित्यत्र तुशब्दः पुनरर्थकः पूरकात्प्राक् विहितं मूलबन्धं द्योतयति। यद्वा व्यावर्त्तनार्थकः निरुक्तबन्धनव्यावर्त्तयतीतिवेदितव्यम्। जालन्धरबन्धं लक्षयति योगशास्त्रे तथाहि "कण्ठमाकुञ्च्य हृदये स्थापयेच्चिबुकं दृढ़म्। बन्धोजालन्धराख्योयञ्जरामृत्युविनाशकः। बध्नाति शिराजालमधोगामि नभोजलम्। ततोजालन्धरोबन्धः कण्ठदुःखौघनाशनः। जालन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे। नपीयूषम्पतत्यग्नौ नच वायुः प्रकुप्यति। कण्ठसङ्कोचनेनैव द्वे नाड्यौ स्तम्भयेद्दृढ़म्। मध्यचक्रमिदं ज्ञेयम् षोडशाधारबन्धनम्" इति। अत्र स्मृतौ कण्ठस्थितम्विशुद्धाख्यञ्चक्रम् मध्यचक्रम् मध्यमञ्चक्रम् तच्च षोड़शाधारबन्धनम् षोडशाधाराणाम् बन्धनकारणम् वेदितव्यम्। षोड़शसंख्यकाः आधाराः स्मर्यन्ते योगशास्त्रे "अङ्गुष्ठगुल्फजानूरुसीवनीलिङ्गनाभयः। हृद्ग्रीवा कण्ठदेशश्च लम्बिका नासिका तथा। भ्रूमध्यञ्च ललाटञ्च मूर्धा च ब्रह्मरन्ध्रकम्। एते हि षोड़शाधाराः निरुक्ता योगिपुङ्गवैः" इति अङ्गुष्ठादि ब्रह्मरन्ध्रान्ताः षोड़शाधारा वेदितव्याः। एष्वाधारेषु धारणायाः फलविशेषः गोरक्षनाथपद्धतेरवगन्तव्यः। अत्र ग्रन्थविस्तारभिया नालेखीतिवेदितव्यम् अत्र पूरकान्ते हठयोगिभिः कुम्भकोऽनुष्ठीयते अस्माकन्तु राजयोगानुयायिनां सम्प्रदायानुसारेण "हकारेण बहिर्याति सकारेण विशेत्पुनः" इत्यादियोगशास्त्रानुमत्या च साधनकाले कुम्भको न विधीयते अभ्यासपरिपाकात् स्वयमेव कुम्भको निष्पद्यत इतिवेदितव्यम्। तथा स्मर्यते च योगवाशिष्ठे "यावदिच्छमवस्थैषा प्रणवस्यापरे क्रमे। बभूव न हठादेव हठयोगो हि दुःखदः। अथेतरे चावसरे प्रणवस्य समस्थितौ। निस्पन्दः कुम्भको नाम प्राणानामभवत्क्रमः" इति रेचकादौ

रेचकारम्भकावयवभूतादिमकालीनस्थिताविति भावः। उड्डीयानबन्धो विधेयः अंतर्नाड़ीनभसि प्राणविहङ्गोड्डीननिष्पत्तये सुषुमनान्तरे प्राणं गमयितुमिति भावः। जरसं निवर्त्त्य तारुण्यम्प्रापयितुम् स्वाभाविकमुक्तिं साधयितुं च। तथा स्मर्यते योगशास्त्रे "कुम्भकान्ते रेचकादौ कर्त्तव्यस्तूड्डिनायकः" इति। अत्र वाक्ये तु शब्दः राजयोगिनां कुम्भकान्तं व्यावर्त्तयति रेचकाद्यनुवर्त्तयतीतिं वेदितव्यम्। अपि च स्मर्यते योगशास्त्रे "बद्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः। तस्मादुड्डीयनाख्योयं योगिभिः समुदाहृतः। उड्डीनङ्कुरुते यस्माद्विश्रान्तम्महाफलम्। उड्डीयानन्तदेव स्यात् तत्र बन्धोऽभिधीयते। उदरे पश्चिमं तानं नाभेरूर्ध्वं च कारयेत्। उड्डीयानो ह्यसौ बन्धो मृत्युमातङ्गकेशरी। उड्डीयानन्तु सहजङ्गुरुणा कथितं सदा। अभ्यसेत् सन्ततं यस्तु वृद्धोऽपि तरुणायते। सर्व्वेषामेव बन्धानामुत्तमोह्युड्डियानकः। उड्डीयाने दृढे बन्धे मुक्तिः स्वाभाविकी भवेत्" इत्यादि। गुल्फयोरधःप्रदेशरूपपार्ष्णिभागेन गुदमेढ्रयोर्मध्यभागरूपयोनिस्थानसम्पीड़नपूर्व्वकं गुदाकुंचनम्मूलबन्धो वेदितव्यः। गलपदवाच्यकण्ठाकुञ्चनपूर्व्वकं चतुरङ्गुलान्तरितहृदयसमीपे ऽधोनमनयत्नपूर्व्वकं हनुपदवाच्यचिबुकस्थापनरूपो जालन्धरबन्धो वेदितव्यः। प्रयत्नविशेषेण नाभेरूर्ध्वाधोभागप्रदेशस्य पृष्ठसंश्लेषानुरूपपश्चिमतानात्मकपृष्ठत आकर्षणमुड्डीयानबन्धो वेदितव्यः। भवति च एतद्बन्धत्रयस्य मुख्यफलम्प्राणस्य ब्रह्मनाड्याम्प्रवेशः। तथा-च स्मर्य्यते योगशास्त्रे "अधस्तात् कुंचनेनाशु कण्ठसङ्कोचने कृते। मध्यपश्चिमतानेन स्यात्प्राणो ब्रह्मनाड़िगः" ननु "समकायशिरोग्रीवं धारयन्नचलं स्थिरः" इत्यादिभगवद्वाक्यात् जालन्धरबन्धो निषिध्यते। तथासति समकायत्वादिव्याहतेस्तत्रोच्यते एतद्बन्धत्रयापेक्षणं साधनदशायां ब्राह्मनाड्यां वायुप्रवेशरूपसिद्धिपर्यन्तं वेदितव्यम्। सत्याञ्च तत्र वायुप्रवेशरूपसिद्धिनिष्पत्तौ तदनपेक्षणम् युज्यते। युक्तञ्च ततः "समकायशिरोग्रीवम्" इत्यभिधानम्। दृश्यते च लोके खातनिष्पत्तिपर्य्यन्तमेव खनित्रधारणम् तन्निष्पत्तौ च तत्परित्यागः। अपिच तत्रैव भगवद्वाक्यात् "यतचित्तेन्द्रियक्रियः प्रशान्तात्मा विगतभीरित्यादिव्यपदेशात् निरुक्तसाधकस्य योगारूढत्वमव्यज्यते। अस्य योगारुरुक्षुत्वस्वीकारे "सुषुम्नान्तर्गते वायौ मनस्थैर्य्यं प्रजायते" "चले वाते चलञ्चितम्" इत्याद्युक्तत्वात् यतचित्तेन्द्रियक्रियत्वानुपपत्तेः "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति भगवदुक्तेः "महाक्लेशादयो दोषाः क्षीयन्ते

मरणादयः" योगारूढत्वपक्षे इत्याद्युक्तत्वाच्च रागद्वेषादिदोषोत्पत्तिहेतुना विषयेषु समाचीनत्वासमीचीनत्वप्रीत्यप्रीतीष्टसाधनत्वानिष्टसधानत्वबुद्धीनां निवृत्तिरूपपद्यते। योगारुरुक्षुत्वपक्षे तु अन्तःकरणस्य रागद्वेषादिसहितस्य रागद्वेषाद्यनुत्पत्तिरूपप्रशान्तात्मत्वानुपपत्तेः"त्यज धर्म्ममधर्म्मञ्च नैव धर्म्मी नचाधर्म्मी स्वाध्यायञ्च सर्व्वकर्म्माणि संन्यसेत् वेदानिमं लोकममुञ्च परित्यज्य आत्मानमन्विक्षेत्,,इत्यादिशास्त्रानुसारेण अन्नादानविसर्गातिरिक्तस्य दन्तधावनमुखक्षालनादेरपि सर्व्वस्य शास्त्रीयस्य लौकिकस्य कर्म्मणः परित्यागे शिष्टा निन्दिष्यन्तीति भीतिविनिवृत्तिरूपविगतभीत्वस्य "आरुरुक्षोर्मुनेर्योगं कर्म्म कारणमुच्यते"इतिभगवद्वाक्यादनुपपत्तेः तस्माद्युक्तम् योगमारुरुक्षोः साधनकाले निरुक्तबन्धत्रयाभ्यसनम् । यद्वा "मतमत्र तु केषाञ्चित् कण्ठबन्धमृविवर्जयेत् । राजदन्तस्थजिह्वाया बन्धःशस्तोभवेदिति"इतियोगशास्त्रात् गुरुप्रसादात् राजदन्तस्थजिह्वाबन्धेऽवगते सति जालन्धरबन्धोऽनपेक्ष्याभवति "अयं हि सर्व्वनाडीनामूर्ध्वं गतिनिरोधकः, इतिराजदन्तजिह्वाबन्धप्रक्रान्तयोगशास्त्रात् सुकरेण राजदन्तस्थजिह्वाबन्धेनापि "बध्नाति हि शिराजालम्" इतिजालन्धरोक्तफलसिद्धेरनुपयोगो जालन्धरबन्धस्येतिकेषाञ्चिदाचार्य्याणां मतम्वेदितव्यम्। तस्माद्युक्तम् समकायशिरोग्रीवमित्याद्यभिधानम्। कायशिरोग्रीवाणां समतया ऋजुत्वेनेतिभावः धारणेन पार्श्वयोः पश्चाच्च द्रष्टुं स्प्रष्टुं च न शक्यते। ततः तत्र दर्शनस्पर्शनजनितचित्तचाञ्चल्यकृतविक्षेपो न सम्भवतीतिवेदितव्यम्। दन्तानां राजानौ राजदन्तौउपरिश्रेणिस्थमध्यवर्तिदन्तद्वयम् यथा "राजदन्तौ तु मध्यस्थावुपरिश्रेणिकौ क्वचित्" इतिहेमचन्द्रः तयोस्तिष्ठतीतिराजदन्तस्था सा चासौ जिह्वा तस्यां राजदन्तस्थजिह्वायाम् बन्धः तदुपरिभागस्य दन्तप्रदेशेन सम्बन्धः राजदन्तस्थजिह्वाबन्धो वेदितव्यः।

यद्वा "हठयोगोहि दुःखदः" इतिवशिष्ठसम्मतेः हठयोगाङ्गीभूतसकलबन्धपरित्यागेनैव समकायत्वादिविशिष्टेन राजयोगानुयायिना साधकेन भवितव्यमितिवेदयति श्रीकृष्णचन्द्रः "समकायशिरोग्रीवम्" इत्यभिधानेनेतिव्यज्यते।

यद्यपि मूलबन्धादिसाहित्येन योगसिद्धिः द्रुतम्भवति। अन्यथा चिरेण तत्साहित्येन तदभ्यासे वैगुण्ये सति नानोपद्रवसम्भवात् तदसाहित्ये सत्यामपि चिरकालापेक्षिण्यां सिद्धिनिष्पत्तौ निरुपद्र-

त्वात् प्रायो योगिनां तत्र सम्मानं दृश्यते। भवति च लोकोक्तिः निरुपद्रवेण वत्सरगम्येन मार्गेण गन्तव्यम्। नच सोपद्रवेण षण्मासगम्येन मार्गेण गन्तव्यम् इति। केचित्तु योगिनः प्रकृते बन्धत्रये जालन्धरमेव विधापयन्ति तदितरावनुपयुक्तौ मन्यन्ते। अत्रेदं रहस्यं यदि श्रीगुरुमुखाज्जिह्वाबन्धःसम्यगवगतः तर्हि जिह्वाबन्धपूर्व्वकेन जालन्धरबन्धेनैव निरुक्तसिद्धिर्निष्पद्यते इतिमूलबन्धोड्डीयानबन्धावनुपयोग्यौ भवतः। तयोर्बन्धयोर्जिह्वाबन्धपूर्व्वकेन जालन्धरबन्धेनान्यथासिद्धत्वात् "जिह्वाबन्धो न विदितश्चेदधस्तात् कुञ्चनेन" इति श्लोकोक्तरीत्याभ्यासः कर्त्तव्यः। त्रयोपि बन्धा गुरुमुखादवगन्तव्यास्तथाच श्रूयते "आचार्य्यवान् पुरुषो वेद" इति। लोकेऽप्युच्यते गुरुहस्तेस्ति कुञ्चिकेति। मूलबन्धो हि सम्यगनवगतोऽनेकव्याधिजनको भवति। तथाहि यदि मूलबन्धाभ्यासे धातुक्षयो विष्टम्भोऽग्निमान्द्यं नादमान्द्यं गुटिकासमूहाकारमजस्येव पुरीषं स्यात् तदा मूलबन्धः सम्यगनवगत इति वेदितव्यम्। यदि धातुपुष्टिः सम्यङ्मलशुद्धिः अग्निदीप्तिः सम्यङ् नादाभिव्यक्तिश्च स्यात्तदा मूलबन्धः सम्यगवगत इतिवेदितव्यम्। असमीचीनाभ्यासजन्यमूलबन्धप्रकोपे यथाक्रमं हरीतकीसेवनीया। सितोपलशुण्ठीघृतानि समाहृत्य संमिश्रीकृत्येतिभावःवटिकाभूतमितियावत् भक्षणीयम्। तत्र घृतभागो न्यूनपरिमाणको ग्राह्यः। शुण्ठीसितोपले समभागे वेदितव्ये। मात्रा तु अग्निमान्द्याद्यनुसारेणैवोह्या। अत्र पूरकरेचकावसरे श्वासप्रश्वासानुसारेणैव यत्नविषेण जपकालस्य क्रमेण दीर्घीकरणानुकूलेनाभ्यासो विधेयः। प्रारम्भकाले योग्यतानुसारेण जपसंख्यानियमो विधेयः। यथा यथा कालपरिमाणवृद्धिः स्यात् तथा तथा संख्याह्रासो विधेयः। सति च सर्व्वसंख्याह्रासे असत्यां च कुम्भकनिष्पत्तौ पुनः संख्यानियमो विधेयः। सत्याञ्च निष्पत्तौ न तदावश्यकत्वमिति वेदितव्यम्। अभ्यासश्च प्रातःकाले मध्याह्नकाले सायङ्काले अर्द्धरात्रे चतुर्वारम्विधेयः। नित्यनैमित्तिकादिकर्म्मनिर्व्वाहो यथाकालं संक्षेपेण विधेयः। स्मर्य्यते च योगशास्त्रे "प्रातर्मध्यदिने सायमर्द्धरात्रे च कुम्भकान्। शनैरशीतिपर्य्यन्तं चतुर्वारं समभ्यसेत्" इति। अत्रस्मृतौ हठ करणात् कुम्भकशब्दाभिधानम्। अत्र तु पूरकरेचकरूपावर्त्तनात्मकोऽभ्यासो वेदितव्यः। चतुर्वाराभ्यासाशक्तौ अर्द्धरात्रं विहाय त्रिसन्ध्यमभ्यसितव्यम्। अयमेव सम्प्रदायः प्रायो योगिनां दृश्यते। अशीतिपर्य्यन्तम् प्रतिकालं संख्यानियमनम्पूर्णयोग्यतापरम् तन्न्यूनत्वे

तन्न्यूनत्वमवेदितव्यम्। अभ्यासकाले अस्माकं सम्प्रदाये यथासम्भवं नासाभ्यन्तरस्थायिनावेव प्राणापानौ प्रयत्नविशेषेण भवत इति वेदितव्यम्। तथाचोक्तम्भगवद्गीतायाम् "प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ" इति। अयोग्यतानुरोधेन तु तदसम्भवे नासिकाग्रात् द्वादशाङ्गुलपर्य्यन्ताम्बरावधिकौ तौ विधेयौ। अभ्यासक्रमेण पूर्व्वः पूर्व्वस्थितिकौ तावल्पाल्पपरिमितिस्थितिकौ विधेयाविति वेदितव्यम्। "बहिर्यद्रेचनम् वायोरुदराद्रेचकः स्मृतः" इति "बाह्यादापूरणम् वायोरुदरे पूरको हि सः" इत्युक्तलक्षणौ प्रयत्नविशेषेण बाह्यवायूपादानकोष्ठवायुनिस्सारणरूपौ पूरकरेचकौ हठयोगसम्मतावस्माकं राजयोगानुयायिनां न सम्मताविति वेदितव्यम्। क्वचित्तु "भस्त्रावल्लोहकारस्य रेचपूरौ ससम्भ्रमौ" इत्युक्तलक्षणौ तौ गौणौ वेदितव्यौ। तयोर्लक्ष्यत्वाभावात्। "युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तञ्च पूरयेत्" इतियोगोक्तेः शनैः शनैःपूरकरेचकौ विधेयौ। तत्रापि योग्यतानुसारेण पूरकः वेगादपि कर्त्तव्यः वेगादपि कृते पूरके तादृक्दोषाभावात्। रेचकस्तु शनैः शनैरेव कर्त्तव्यः वेगात् कृते रेचके बलहानिप्रसङ्गात्। तथाचोच्यते योगशास्त्रे "ततः शनैः शनैरेव रेचयेन्न तु वेगतः" इति। अभ्यासारम्भे प्रयत्नविशेषेण पूरकरेचकौ विधेयौ। अभ्यासपरिपाके स्वभावतः स्वत एव प्रतिलोमविलोमतःआवर्त्यमानौ यथाक्रमं यथाकालं स्थास्यत इति वेदितव्यम्।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये द्वितीयाध्यायस्य प्रमथः पादः समाप्तः ॥ २ ॥ १ ॥ ५ ॥

## ततो हि मनसः स्थैर्य्यङ्कुम्भकनिष्पत्तिश्च ।२।२।१।

ततः पूर्व्वनिर्दिष्टसाधनानन्तरम्मनसः स्थैर्य्यम् चित्तस्य स्थिरता कुम्भकनिष्पत्तिः "न रेचको नैव च पूरकोऽत्र नासापुटे संस्थितमेव वायुम्। सुनिश्चलं धारयते क्रमेण कुम्भाख्यमेतत्प्रवदन्ति तज्ज्ञाः" इत्युक्तलक्षणकुम्भकाख्यप्राणायामस्य निष्पत्तिः परिपाकरूपेण चरमसम्पत्तिः निष्पन्दनामकुम्भकसिद्धिरिति वेदितव्यम्। चेति पुनरर्थकमव्ययम्। अत्र भवतीति योजनीयम्। निरुक्तस्थिरीकरणाभ्यासात् नाम दृष्टिस्थैर्य्याभ्यासात् पूरकरेचकरूपप्राणायामाभ्यासाच्च "यत्र दृष्टिर्लयस्तत्र" इत्युक्तत्वात् "मनोलयकरी" इत्यभिधानात् "चले वाते चलं चित्तम्

निश्चले निश्चलम्भवेत्" इत्यभिधानात् "हेतुद्वयन्तु चित्तस्य वासना च समीरणः। तयोर्विनष्ट एकस्मिन् तौ द्वावपिविनश्यतः" इत्यभिधानात् "द्वे बीजे राम चित्तस्य प्राणस्पन्दनवासने। एकस्मिनृश्च तयोर्नष्टे क्षिप्रं द्वे अपि नश्यतः" इति योगवाशिष्ठात् "यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता। योगिनो यतचित्तस्य युञ्जतो योगमात्मनः" इतिभगवदुक्तेश्च उपपन्नम्प्राप्तकाले मनसः स्थैर्य्यम्। अतएव "मनश्च बध्यते येन पवनस्तेन बध्यते" इत्युक्तेरूपपन्ना मनःस्थैर्य्यसमकालीना कुम्भकनिष्पत्तिरिति वेदितव्यम्। यथा कुम्भो जलेन पूर्णस्तिष्ठति तथा येन साधनेन वायुना उदरं पूर्णन्तिष्ठति तत्साधनम् कुम्भकपदवाच्यम्भवतीति वेदितव्यम्। कुम्भकः कनिष्ठमध्यमोत्तमभेदेन पृथग्लक्षणस्त्रिविधो वेदितव्यः। तथा स्मर्य्यते योगशास्त्रे "कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे। उत्तमे स्थानमाप्नोति ततो वायुं निरोधयेत्" इति। अपिच लिङ्गपुराणे "नीचो द्वादशमात्रस्तु सकृदुद्घात ईरितः। मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः। मुख्यस्तु यस्त्रिरुद्घातः षट्त्रिंशन्मात्र उच्यते। प्रस्वेदकम्पनोत्थानजनकश्च यथाक्रमम्। आनन्दो जायते चात्र निद्रा धूमस्तथैव च। रोमाञ्चध्वनिसंविित्तिरङ्गमोटनकम्पनम्। भ्रवणस्वेदजलपाढ्यं संविन्मूर्च्छाञ्जयेत्तदा। तदोत्तम इति प्रोक्तः प्राणायामः सुशोभनः" इति। अत्र धूमपदेन चित्तान्दोलनम् वेदितव्यम्। उद्घातलक्षणन्तु योगशास्त्रे "प्राणेनोत्सर्पमाणेन अपानः पीड्यते यदा। गत्वा चोर्ध्वं निवर्त्तेत एतदुद्घातलक्षणम्" इति "अङ्गुष्ठाङ्गुलिमोक्षं त्रिस्त्रिर्जानुपरिमार्ज्जनम्। तालत्रयमपि प्राज्ञा मात्रासंज्ञाम्प्रचक्षते" इत्याह योगियाज्ञवल्क्यः। कुम्भकाख्यप्राणायाम एव अभ्यासक्रमेण वर्द्धमानः प्रत्याहारधारणाध्यानसमाधिशब्दैर्व्यपदिश्यते। तदुक्तं स्कन्दपुराणे "प्राणायामद्विषट्केन प्रत्याहार उदाहृतः। प्रत्याहारद्विषट्केन धारणा परिकीर्तिता। भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम्। ध्यानद्वादशकेनैव समाधिरभिधीयते" इति। सार्द्धपलद्वयात्मकः कालः प्राणायामकालो वेदितव्यः। षड्भिः श्वासैः एकम्पलम्भवति। अयमेव प्राणायामकालः क्रमेण उत्तरोत्तरम् द्वादशगुणितः प्रत्याहारादिकालो वेदितव्यः। एतदुक्तम्भवति पञ्चविंशतिपलात्मकः प्रत्याहारकालः। पञ्चघटिकात्मकः धारणाकालः। षष्टिघटिकात्मकाहोरात्रपरिमाणः ध्यानकालः। द्वादशाहोरात्रपरिमाणः समाधिकालो वेदितव्यः। वस्तुतस्तु यस्मिन्नेव काले अल्पपरिमाणेऽनल्पपरिमाणे वा मनसः समाहितावस्थितिसम्पत्तिः

स्यात् स एव कालः समाधिकालत्वेन अभ्युपगम्यते राजयोगिवर्य्यैः ॥ २ ॥ २ ॥ १ ॥

## आनन्दानुभवश्च । २ । २ । २ ।

आनन्दस्य "यो वै भूमा तत्सुखम्" इत्युपनिषद्घुष्टस्य आनन्दस्य ब्रह्माभिन्नस्वरूपभूतसुखस्य अनुभवः उपलम्भः साक्षात्कार इत्यर्थः । चेतिपुनरर्थकमव्ययम् । तथाच स्मर्य्यते लिङ्गपुराणे "आनन्दो जायते चात्र" इति । अपिच स्मर्य्यते योगशास्त्रे "चित्तानन्दन्तदा जित्वा सहजानन्दसम्भवः" इति। अत्रायं क्रमः परिचयावस्थायां देहेषु चाग्निकलास्पर्श इव स्पर्शोऽनुभूयते । तथाच स्मर्य्यते योगशास्त्रे "अपाने ऊर्ध्वगे जाते प्रयाते वह्निमण्डलम् । तदानलशिखा दीर्घा जायते वायुनाहता। ततो यातो वह्न्यपानौ प्राणमुष्णस्वरूपकम् । तेनात्यन्तप्रदीप्तस्तु ज्वलनो देहजस्तथा" इति । परन्तु अत्रेत्यवधेयम् निरुक्तज्वलनः न दाहमुत्पादयति किन्तु सुखजनकप्रकाशमात्रमिति । अविमुक्तादिप्रदेशाच्च कश्चिदनिर्वचनीयः स्पर्शविशेषोऽभिव्यज्यमानः पादादिमस्तकपर्य्यन्तं शरीरम् व्याप्नोति। स एव ब्रह्मस्पर्शोऽभिधीयते।तथोक्तम्भगवद्गीतायाम् "युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः। सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते" इति । तदानीं साधकः तदलौकिकानुपमेयस्पर्शरूपशान्तिसुखविरहमसहमानः न कायेन कर्त्तुं न वचसा वक्तुं न मनसा मन्तुं चोत्सहते । न कम्पकारणक्लिष्टोपि कम्पते । न च ततोधिकम् किञ्चित् सुखं मन्यते । तथाचोक्तम्भगवद्गीतायाम् "यं लब्ध्वा चापरं लाभं मन्यते नाधिकन्ततः। यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते" इति । अत्र आनन्दस्य अनाद्यविद्यावृतबीजरूपस्य तृणादिसंकुलभूम्यन्तराक्षिप्तशस्यबीजस्येव पूर्व्वोक्तसाधनद्वारा तृणाद्यपनयनफलकर्षणवारीसकादिद्वारा इव अङ्कुरत्वम् शस्याङ्कुरत्वमिव वेदितव्यम्। अस्य च कालान्तरेण सम्पन्नस्य वृक्षरूपत्वं संसारनिवृत्तिफलनिष्पत्तिः शस्याङ्कुरस्य कालान्तरेण सम्पन्नस्य वृक्षत्वमिव कणिशफलनिष्पत्तिरिवेति वेदितव्यम् ॥ २ ॥ २ ॥ २ ॥

## तत्सम्पत्तौ निमित्तान्तरोपस्थानं यथोपयोगम्।२।२।३।।

तेषां मनः स्थैर्य्यकुम्भकनिष्पत्त्यानन्दानुभवानां पूर्व्वनिर्दिष्टानां सम्पत्तौ निष्पत्तौ मनोनिरोधयथेच्छवायुरोधप्रचयात्मकानन्दोत्पत्ति-

रूपाणान्निमित्तान्तराणाम् अविमुक्तसेवनाद्यतिरिक्तसाधनीभूतानां हेत्वन्तराणां यथाक्रमं लब्धव्यसिद्धिसाधकानाम् उपस्थानम् उपस्थितिः यथोपयोगम् उपयुक्त्यनुसारेण यथावसरमितिभावः अत्र भवतीति योजनीयम् । इयं योगपरिपाटी यत् पूर्व्वपूर्व्वनैमित्तिकसम्पत्तौ उत्तरोत्तरं निमित्तान्तरम् भृत्यमित्रादिवदुपत्तिष्ठति । तथाच शास्त्रम् "योग एवाध्यापकः" इति । तदुपस्थापकत्वमेव तदध्यापकत्वम्वेदितव्यम् । एतावता उक्तम्भवति स्वयमेव बोद्धा पुरुषः यथावसरमुपागतंविधेयंविजानाति । तथाचोच्यते श्रीमद्भागवते "आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः" इति।श्रूयतेपि "पुरुषत्वे चाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति। विज्ञातम्पश्यति। वेद श्वस्तनम् वेद लोकालोकौ । मर्त्येनामृतमीप्सत्त्येवम् सम्पन्नोऽथेतरेषाम्पशूनामशनापिपासे एवाभिविज्ञानमिति"॥ २ ॥ २ ॥ ३ ॥

## गुरुशुश्रूषणादविलम्बः ।२।२।४।

गुरुशुश्रूषणात् गुरोः शुश्रूषायाः लाक्षणिकत्वात् सेवाया इतिभावः अविलम्बः न विलम्बः अविलम्बः विलम्बप्रतियोगिवस्तुभूताचिरकालः । अत्र सिद्धिसम्पत्तौ भवतीति योजनीयम् । तथोक्तं योगशास्त्रे "गुरुं सन्तोष्य यत्नेन यो वै विद्यामुपासते अविलम्बेन विद्यायास्तस्मात्फलमवाप्नुयुः। गुरुप्रसादतो लोके लभते शुभमात्मनः।तस्मात्सेव्यो गुरुर्नित्यमन्यथा न शुभम्भवेत्" इति । यथा सन्निहितप्रदीपस्य घटाद्यवगमनम् द्रुतञ्जायते। सन्निहितकर्णधारस्य समुद्रतरणं द्रुतं दृश्यते। सन्निहितमार्गप्रदर्शकस्य च द्रुतगमनानुकूलङ्गन्तव्यगमनन्द्रुतन्दृश्यते। तथैव कृतगुरूपसदनस्य पुरुषस्य शुश्रूषणजातप्रसादात् गुरूपदिष्टसाधनसाध्यसिद्धिसम्पत्तिः शीघ्रम्भवतीति वेदितव्यम् । स्मर्य्यतेपि "गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद् भव मुक्तः" इति। भवति च गुरुशब्दस्य तमस्तन्नाशकार्थकवर्णद्वयात्मकस्य अन्धकारनाशकत्वंव्युत्पन्नम् । ततश्च युक्तन्तस्य गुरोः प्रदीपसादृश्यम् "गुरुकर्णधारः" इतिस्मरणात् । युक्तञ्च कर्णधारसादृश्यम् "नान्यः पन्था विद्यतेऽयनाय" इतिश्रवणात् ज्ञानस्य मार्गत्वोपपत्तौ युक्तन्तस्य मार्गप्रदर्शकत्वम् "तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया।" इतिभगवदुक्तिः प्रकृतम्पोषयतीति वेदितव्यम् । गीतञ्च स्वाराज्यसिद्धौ "चिरान्मग्नेनान्तः प्रकृतिविषमे जन्मजलधौ मया पुण्यैर्लब्धो गुरुरमृतचिन्तामणिरहो ।

यदीयाभिर्गोभिर्विशदमधुराभिर्वितिमिरे स्वसम्पूर्णे यस्मान्निरवधि सुखे धामनि रमे" इति शतसहस्रशः शास्त्रशासनैर्गुरुमहिमा प्रशस्यते इति वेदितव्यम् ॥ २ ॥ २ ॥ ४ ॥

## मनोनुसरणात्तज्जयः ।२।२।५।

मनसः विमर्शकात्मकान्तःकरणस्य अनुसरणात् अनुव्रजनात् किञ्चिदादभिलषितसम्पादनादित्यर्थः तस्य मनसो जयः वशीभावः। अत्र भवतीति योजनीयम्। तथाच स्मर्य्यते "यत्र यत्र मनो याति न निवार्य्यंततस्ततः। अवारितं लयं याति वार्य्यमाणन्तु वर्द्धते। यथा निरङ्कुशो हस्ती कामम्प्राप्य निवर्त्तते। अवारितम्मनस्तत्र स्वयमेव विलीयते" इति। अपिच "उप्यमानम्मुहुः क्षेत्रं स्वयं निर्वीर्य्यतामियात्। न कल्पते पुनः सूत्या उप्तम्बीजञ्च नश्यति। एवं कामाशयं चित्तं कामानामतिसेवया। विरज्यते यथा राजन्नाग्निवत् कामविन्दुभिः" इति। तथासूत्रितञ्च श्रीमता पतञ्जलिना "यथाभिमतध्यानाद्वा" मनसः यदेवाभिमतन्तदेव ध्येयं स्यात्। तत्र स्थिरीभूतम्मनः अन्यत्रापि स्थिरीभूयात्। यद्यपि मनोजये तदनुसरणम् तन्निवारणञ्च साधनद्वयम् विधीयते। "चपलमपि मनो लालनैर्वा हठाद्वा" इतिस्मरणात् तथापि लालनशब्दस्य प्रथमतः पूर्व्वप्रयोगात् तस्यैव मुख्यविधेयत्वम् वेदितव्यम्। हठशब्दस्य च द्वितीयतः पश्चात् प्रयोगात् गौणविधेयत्वञ्च। अत्रेदं रहस्यं यदि मनसः वेश्यागमनमदिरापानादि अत्यन्तनिषिद्धमनर्थकारि वस्त्वभिलषितं स्यात् तदा तदनुसरणमन्तरा तन्निवारणमेव विधेयमिति वेदितव्यम्। यद्यपि "जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते' ध्यानमात्रेण योगीन्द्रो दुरितौघं विनाशयेत्' निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इत्यादिवाक्यैः योगिनां निषिद्धाचरणेनापि नानर्थशंका तथापि योगिभिरपि लोकसंग्रहार्थम् विधिपरैरेव भवितव्यम् न निषेधपरैः। तथाच भगवद्वाक्यम् "लोकसंग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि" "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति। अपिच विद्यारण्यमुनिवाक्यम् "अथवा कृतकृत्योपि लोकानुग्रहकाम्यया। शास्त्रीयेनैव मार्गेण वर्त्तेहङ्काममक्षतिः" सामान्यविषये मनो हठमनपेक्ष्य तदनुसरणात् लालयित्वैव वशीकर्त्तव्यम्। दृश्यतेपि लोके दुर्दमवाजिनः तदभिमतगत्यादानपूर्व्वकम् स्वाभिमतपथि चालनम् ॥ २ । २ ॥ ५ ॥

## प्रणवसञ्जपनाद्विघ्ननिरासः ॥२।२।६।

प्रणवस्य ॐ कारस्य सञ्जपनात् सम्यगर्थभावनापूर्व्वकम् दीर्घोच्चारणपूर्व्वकञ्च जपनात् जपकरणात् विघ्नस्य अन्तरायस्य मोहविक्षेपादेरितिभावः निरासः निरसनं विनाश इतिभावः।अत्रभवतीति योजनीयम्। तथाचोक्तं योगशास्त्रे "सन्त्यत्र बहवो विघ्ना दारुणा दुर्निवारणाः। तथापि साधयेद्योगी प्राणैः कण्ठगतैरपि। ततो रहस्युपाविष्टः साधकः संयतेन्द्रियः। प्रणवम्प्रजपेद्दीर्घं विघ्नानां नाशहेतवे" इति। "प्रणवं दीर्घमुच्चार्य्य घण्टानादं विसोर्णवत्" इत्यादिस्मरणात्। मूलाधारादिब्रह्मरन्ध्रपर्य्यन्तम्। गम्भीरस्वरेण वायुबलितेन घण्टानादरूपेण चिरेण जपेदित्यर्थः। प्रणवम्प्रजपेद्दीर्घमित्येतदंशस्य अयमाशयो वेदितव्यः। अवशिष्टांशः स्पष्ट एव। सूत्रितञ्च श्रीमता पतञ्जलिना योगाचार्य्येण "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" परिगणिताश्चान्तरायास्तेनैव "व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्ते ऽन्तरायाः" इत्यनेन सूत्रेण। तत्र व्याधिः धातुरसकरणवैषम्यम् वातादिदोषत्रयवैषम्यम्वा। स्त्यानमकर्म्मण्यता चित्तस्य।संशयः सङ्कल्पविकल्पात्मकः इदमेवं स्यान्नैवं स्यादिति। प्रमादः अनवधानम् विधेयविस्मृतिरितिभावः। आलस्यम् शरीरस्य मनसश्च गौरवादप्रवृत्तिः। अविरतिः बिषयासक्तिः। भ्रान्तिदर्शनम् विपर्य्ययज्ञानम्। अलब्धभूमिकत्वम् समाधिभूमेरलाभः। अनवस्थितत्वम् लब्धभूमौ चित्तचाञ्चल्यम्। एते चित्तविक्षेपरूपा योगप्रतिपक्षाः अन्तरायपदवाच्याः विघ्ना वेदितव्याः। उच्यन्ते शिवसंहितायाम् नारीशय्याशनवस्त्रादिस्नानपूजाविधिहोमादिधौतिप्रक्षालनादिभोग रूपधर्म्मरूपज्ञानरूपा बहवो विघ्नाः। ते ऽत्र,ग्रन्थविस्तारभिया न प्रतिपादितास्ततएवावगन्तव्याः साधकैः ॥ २ ॥ २ ॥ ६ ॥

## सेवनन्त्वानुद्वेगं मनसः ॥ २ । २ । ७ ॥

पूर्व्वाभिहितम् अविमुक्तादिसेवनम् तुशब्दश्चार्थकः आ अनुद्वेगम् अनुद्वेगपर्य्यन्तम्। अत्र विधेयमिति योजनीयम्। यावदेव मनः उद्विग्नं न स्यात् तावदेव भ्रूमध्यादिस्थानम् मनोदृष्टिभ्यां सेवेत इतिभावः। मनस्युद्विग्ने विक्षेपसम्भवः ततः ब्रह्मस्पर्शरूपप्रशमसुखहानिश्च सम्भवति। तस्मात् शनैः शनैरेव पुनःपुनर्विक्षिप्तञ्चित्तम् तदनुसरणेन अभ्यासक्रमेण उत्तरोत्तरम् क्षणमुहूर्त्तयामदिनादिकालावधि-

त्वेन लब्धप्रतिष्ठम् समाहितम् कुर्य्यात्। तथाच भगवद्वाक्यम् "शनैः शनैरुपरमेद्बुद्धया धृतिगृहीतया। आत्मसंस्थम्मनः कृत्वा न किञ्चिदपि चिन्तयेत्" इति शनैः शनैः क्रमेण बाह्यविषयेभ्यस्ततस्तत इन्द्रियेभ्यः ततस्ततोविपरीतप्रत्ययेभ्यश्च मन्दं मन्दमन्त करणमुपरमयेत् उपरतङ्कुर्य्यात्। योगनिष्पादनैककामितया विषयैः इन्द्रियैः असत्प्रत्ययैश्च स्पर्शो यथा न स्यात् तथा मनसो धार्य्यातिरिक्तप्रवृत्तिमुपशमयेदित्यर्थः। तथाच श्रूयये "यच्छेद् वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि। ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनि" इति। मनः आत्मसंस्थं सम्यगात्मन्येव चैतन्यरूपे स्थितम् निश्चलङ्कृत्वा किञ्चिदपि बाह्यमाभ्यन्तरम्वा वस्तु न चिन्तयेत् न भावयेत्। किन्तु सर्व्वम्ब्रह्मैव भावयेदित्यर्थः। एतेन ब्रह्माकारवृत्त्या मनसो योऽन्यभावनाया अभावः स एष एव योग इति सूचितम्भवति। तथाच तत्रैव "यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्। ततस्ततोनियम्यैतदात्मन्येव वशं नयेत्"इत्युच्यते। अत्रापि यतोयतस्ततस्तत इतिशब्दध्वनितपौनःपुन्येन उद्वेगनिरासेनैव अनुद्विग्नदशायाम् मनसः भ्रूमध्यादिव्यञ्जित आत्मनि स्थापनंविधीयते। एवशब्देन धार्य्यातिरिक्तस्थानात् मनसः आकर्षणंविधीयत इति वेदितव्यम्। अपिच तत्रैव "प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्। उपैति शान्तरजसम्ब्रह्मभूतमकल्मषम्" इत्यत्र प्रशान्तमनसः शान्तरजस एव साधकस्य ब्रह्मस्पर्शरूपमुत्तमं सुखम्प्राप्यम् स्वीक्रियते। मनउद्वेगे तु प्रशान्तमनस्त्वं शान्तरजस्त्वं न सम्भवतः "उद्वेग उद्भ्रमः" इतिकोशात् उद्वेगस्य उद्भ्रमपदवाच्यस्य चलनवृत्तिमतः रजोरूपत्वोपपत्तौ अप्रशान्तिवृत्तिमतः सत्त्वरूपत्वानुपपत्तेः। ननु स्वभावो दुरतिक्रमः इतिन्यायेन मनसः स्वाभाविकवेगस्य निरोधो न सेत्स्यति इति चेन्न "स्वभावविजयः शौर्य्यम्" इत्युद्धवम्प्रति भगवदुक्तेः स्वभावविजयोपपत्तेः। अपिच उच्यते भगवद्गीतायाम् "अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते" सूत्रितञ्च श्रीमता पतञ्जलिना "अभ्यासवैराग्याभ्यान्तन्निरोधः" इति। परन्तु मनोजयी पुरुषः मनः अभ्याससम्बन्धिना वैराग्यसम्बन्धिना च मनसा एव जयेत्। न च मनो विहाय केवलैर्विषयत्यागादिभिरुपायैस्तथाचभगवदुक्तिः "कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते। यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन। कर्मेन्द्रियैः कर्म्मयोगमशक्तः स विशिष्यते"

"आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः। बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः। अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत्" इति। तथाचोक्तं योगवाशिष्ठे "मन एव समर्थः स्यान्मनसो दृढ़निग्रहे। अराजाकः समर्थः स्याद्राज्ञो राघव! निग्रहे। तृष्णाग्रहगृहीतानां संसारान्तरपातिनाम्। आवर्त्तैरुह्यमानानां वरं स्वमन एव नौः। मनसैव मनः छित्वा पाशं संसारबन्धनम्। भवादुत्तारयात्मानम् नासावन्येन तार्य्यते। यायोदेति मनोनाम्नि वासना वासितान्तरा। तान्ताम्पारग्रहे प्राज्ञस्ततोऽविद्याक्षयो भवेत्। भोगैकवासनास्त्यक्त्वा मुञ्च त्वं भेदवासनाः। भावाभावौ ततस्त्यक्त्वा निर्विकल्पः सुखो भवेत्" इति। अपिचोक्तम् उत्तरगीतायाम् "मनसा मन आलोच्य स्वयं सिध्यन्ति योगिनः" इति। अत्र व्याख्यातं श्रीमद्गुरुवरैः। मनसा मन आलोच्य इत्यालोचनमुत्पथान्निवर्त्तनम्। यथाच काचिद्वनिता कुत्रचित्प्रस्थानकाले स्वमित्रायैवम् वदति मम शिशुरालोचनीयः इत्युक्तवत्यां तस्यां सा चैवं जानाति उत्पथान्निवर्त्तयितुमाबोधयति करोति च तथा। अपिच भगवदुक्तिः "असंयतात्मना योगो दुष्प्राप इति मे मतिः। वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः" इति ॥ २। २। ७।

## तच्च यमनियमपुरःसरम् ॥ २। २। ८॥

तत् अविमुक्तसेवनप्राणापानविनिमयादिसाधनम्। चेति पुनरर्थकमव्ययम्। यमश्च नियमश्च यमनियमौ तौ पुरःसरौ पूर्व्वसंस्थौ यस्य तत् तथाभूतम् यमनियमपूर्व्वकम्। अत्र विधेयमिति योजनीयम्। एतौ यमनियमौ योगाङ्गीभूतौ वेदितव्यौ। तथाचोक्तम्पातञ्जलयोगसूत्र "यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि" इति। तत्र यमनियमाङ्गं श्रीमान्सूत्रकारो गुरुवरः अत्रोपदिशति आसनमग्र उपदेक्ष्यति। निरुक्तकुम्भकप्राणायामस्यैव उत्तरोत्तरम् प्रत्याहारादिसमाधिपर्य्यन्तं वर्द्धमानावस्थान्तरत्वेन परिणतत्वात् कुम्भकमात्रमुपदिश्य तत्रैव प्रत्याहाराद्यन्तर्भावि इत्याशयेन न तानि पृथगुपदिदेशेति वेदितव्यम्। यमनियमौ वक्ष्यमाणसूत्रद्वयेन श्रीमता पतञ्जलिना योगाचार्य्येण सूत्रितौ तत्र "अहिंसा-सत्या-स्तेय-ब्रह्मचर्य्या-परिग्रहा यमाः" इति "शौच-सन्तोष-तपः-स्वाध्याये-श्वरप्रणिधानानि नियमाः" इति क्वचिद्योगशास्त्रे दश दशसंख्याकौ तौ निर्दिष्टौ तथाचोक्तम् "अहिंसा सत्यमस्तेयम्ब्रह्मचर्य्यङ्क्षियाऽर्ज्जवम्। क्षमाधृतिर्मिताहारशौचञ्चेति यमा दश। तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्।

सिद्धान्तःश्रवणञ्चैव ह्रीर्मतिश्च तपोहुतम्। दशैते नियमाःप्रोक्ता योगशास्त्रविशारदैः" इति। श्रीमद्भागवते तु द्वादशद्वादशसंख्याको उद्धवम्प्रति श्रीमद्भगवता उपदिष्टौ "अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः। आस्तिक्यम्ब्रह्मचर्यञ्च मौनं स्थैर्यं क्षमा भयम्। शौचं जपस्तपो होमः श्रद्धातिथ्यम्मदर्चनम्। तीर्थाटनम्परार्थेहा तुष्टिराचार्य्यसेवनम्। एते यमाः सनियमाः उभये द्वादश स्मृताः। पुंसामुपासितास्ते तु यथाकामं दुहन्ति हि" इति। अत्र शौचम् बाह्याभ्यन्तरभेदेन द्विसंख्याकम्। ततः द्वादशसंख्यापूर्तिरिति वेदितव्यम्। अत्र उभयोः प्रवृत्तनिवृत्तयोर्मुमुक्ष्वोरकामस्य यमा मुख्याः सकामस्य नियमा मुख्याः इत्यर्थो वेदितव्यः। उक्तञ्च तत्रैव "यमानभीक्ष्णं सेवेत नियमान्मत्परः क्वचित्। मदभिज्ञङ्गुरुं शान्तमुपासीत मदात्मकम्" इति। अत्र मत्परइत्यनेन भगवत्परत्वम्प्रतिपाद्यते ततो मुमुक्षुत्वमित्यर्थः "यमानभीक्ष्णं सेवेत" इत्यनेन मुमुक्षोर्यमसेवनम् सर्व्वदाभिधीयते। "नियमान्मत्परः क्वचित्" इत्यनेन मुमुक्षोर्नियमसेवनम् शक्त्यनुसारेण अभ्यासाविरोधेन यथाकालं यथासम्भवं विधीयते। "मदभिज्ञमित्यनेन ब्रह्मज्ञत्वम्प्रतिपाद्यते। "गुरुं शान्तमुपासीत मदात्मकमित्यनेन यमेष्वप्यादरम्परित्यज्य शान्तिसम्पन्नो ब्रह्मस्वरूपो गुरुरुपासनीय इत्युपदिश्यते। तथाचोक्तं गुरुसेवनमाहात्म्यम् कपिलगीतायाम् "अनेकैर्नामसंस्कारात् सद्गुरुः सेव्यते बुधैः। सन्तुष्टः श्रीगुरुर्देव आत्मरूपम्प्रदर्शयेत्" उक्तञ्च योगबीजे "मरुज्जयो यस्य सिद्धः संसेवेत गुरुं सदा। गुरुवक्त्रप्रसादेन कुर्यात्प्राणजयम्बुधः" इति। उक्तञ्च राजयोगिवेदान्तितार्क्किकैरागमीयैश्च "नानाविधैः शास्त्रकदम्बकैश्च ध्यानादिभिः सत्करणैर्न गम्यः। चिन्तामणिं ह्येकगुरुम्विहाय" इति स्कन्दपुराणे "आचार्य्याद्योगसर्व्वस्वमवाप्य स्थिरधीः स्वयम्। यथोक्तं लभते तेन प्राप्नोत्यपि च निर्वृतिम्" इति सुरेश्वराचार्य्यैश्च "गुरुप्रसादाल्लभते योगमष्टाङ्गसंयुतम्। शिवप्रसादाल्लभते योगसिद्धिञ्च शाश्वतीम्" इति। एवम् "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्यादि शतशः स्मृतयः गुरुसेवनमहिमानमुद्घोषयन्ति। ततः सर्व्वात्मना श्रीगुरुदेवः संसारार्णवज्ञाननौकाकर्णधारः मुहुर्मुहुर्वन्द्यो मनसा कर्म्मणा वाचा सेवनीयश्चेति वेदितव्यम्॥ २॥ २॥ ८॥

एवम् श्रीमान्सूत्रकारः सविधियोगमुपदिश्य योगिविधेयम् पथ्यम्परिचापयति वक्ष्यमाणसूत्रद्वयेन



## दोषत्रयाऽनुत्पत्तिविनाशनिमित्तम्पथ्यम् । २ । २ । ६ ।

दोषत्रयस्य प्रकृतिपरिमित्यतिक्रान्तौ व्याधिहेतूनां वातपित्तश्लेष्मणाम् त्रयस्य तथाभूतस्य अनुत्पत्तिविनाशयोर्निमित्तम् हेतुः पथ्यम्। अत्र योगिसेव्यमिति योजनीयम्।तथाचोक्तं योगशास्त्रे"गोधूमशालिजवषाष्ठिकशोभनान्नं क्षीराज्यखण्डनवनीतसितामधूनि। शुण्ठीपटोलकफलादिकपञ्चशाकम् मुद्गादिदिव्यमुदकञ्च यमीन्द्रपथ्यम्" "पुष्टं सुमधुरं स्निग्धं गव्यं धातुप्रपोषणम् । मनोऽभिलषितं योग्यं योगी भोजनमाचरेत्"इति। अत्र मनोभिलषितशब्दोपात्ताऽविहितभुक्तिप्रसक्तिनिवृत्तये योग्यशब्दोपादानम् इतिवेदितव्यम्। विहितमेव मनोऽभिलषितम्भोक्तव्यम् । नाविहितमित्यर्थः। " अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठोधातुस्तत्पुरीषम्भवति । योमध्यमस्तन्मांसं, योऽणिष्ठः तन्मनः, मूत्रं लोहितं प्राणश्चापाङ्कार्य्यम्, अस्थिमज्जावाक् तेजसः, अध्यात्ममिदमन्नम, तस्याशितस्य कार्य्यं मांसादि, इदमपाम्पीतानाङ्कार्य्यं लोहितादि, इदन्तेजसोशितस्य कार्य्यमस्थ्यादि" इत्यादिश्रवणात् "चतुर्व्विधस्य चान्नस्य रसस्त्रेधा विभज्यते। तत्र सारतमो लिङ्गदेहस्य परिपोषकः सप्तधातुमयम्पिण्डमेति पुष्णाति मध्यमः। याति विण्मूत्ररूपेण तृतीयः सप्ततो बहिः । आद्यभागे द्वयं नाड्यः प्रोक्तास्ताः सकला अपि। पोषयन्ति वपुर्वायुमापादतलमस्तकम्। नाडीभिराभिः सर्वाभिर्वायुः सञ्चरते यदा। तदैवान्नरसो देहे साम्येनेह प्रवर्त्तते"इतिस्मरणाच्च मनसोऽन्नमयत्वमुपद्यते तदुपपत्तौ तन्तुपटादिवत् मृद्घटादिवत् दुग्धदध्यादिवत् कार्य्यकारणसाधर्म्यात् सात्विकान्नात् सात्विकमनोजायते राजसाद्राजसम् तामसात्तामसमित्युपपन्नं वेदितव्यम्। अत्र प्रसङ्गात् अन्नानि कति विधानि इति विचारः प्रस्तूयते। अत्र उपरितनस्मृतौ अन्नस्य चातुर्विध्यम्प्रतिपादितम् चतुर्विधस्येति वाक्यात् । तथाच सुश्रुतः "तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य"इत्यादिना चातुर्विध्यम्प्रतिपादयति।तत्र भक्ष्यभोज्यपेयलेह्यभेदेन चतस्रो विधा वेदितव्याः। केचिदायुर्व्वेदिनः षट् प्रकारान् स्वीकुर्व्वन्ति ।तथाचोच्यते"आहारं षड्विधं चोष्यं पेयं लेह्यं तथैवच। भोज्यं भक्ष्यं तथा चर्व्यम्"इत्यादिना। तत्र चर्व्यस्य भक्ष्ये चोष्यस्य च पेये अन्तर्भावो वेदितव्यः। अथ प्रकृतम्प्रतिपाद्यते "मन एव मनुष्याणाङ्कारणम्बन्धमोक्षयोः"इतिस्मरणात् मनसोबन्धमोक्षकारणत्वमुपपन्नम्भवति"सत्वात्सञ्जायते ज्ञानम्"इतिभगवदुक्तेः "ज्ञानादेव तु

कैवल्यम्" इतिश्रवणात् "ज्ञानादेव विमुच्यते" इतिश्रवणाच्च। सात्विकमनसः ज्ञानोत्पत्तिरुत्पद्यते ज्ञानात्तु मुक्तिनिष्पत्तिरुपपद्यते तस्माद्युक्तं योगिभिः सात्विकान्नरूपपथ्यसेवनमिति वेदितव्यम्। अन्नजलतेजसान्निरुक्तत्रिवृत्करणव्यपदेशात् सप्तधातुमयपिण्डपदवाच्यशरीरस्य अन्नजलतेजोमयत्वमुपपन्नम्भवति। "धर्म्मार्थकाममोक्षाणां शरीरं साधनम्परम्" इतिस्मरणात् शरीरस्य पुरुषार्थहेतुत्वमुपपन्नम्भवति। शरीरमपि पूर्व्ववत् कार्य्यकारणसादृश्यात् सात्विकान्नादिमयं सात्विकवृत्तिमदुपपन्नम्भवति। असात्विकमयम् असात्विकवृत्तिमदित्युपपन्नम् वेदितव्यम् "इन्द्रियाणाम्मनोनाथः"इतिस्मरणात्""इन्द्रियेभ्यः परम्मनः" इतिभगवदुक्तेश्च इन्द्रियसमुदायरूपशरीरस्य मनःप्रेर्य्यत्वमुपपद्यते। ततः सात्विके मनसि शरीरं सात्विकवृत्तिकमुपपद्यते। अन्यथा अन्यथावृत्तिकम्। एतावता उक्तम्भवति सात्विकरसपरिणतसात्विकमनःप्रेरितशरीरस्य सात्विकवृत्तिमत्त्वम् सात्विकवृत्तिमत्वे तस्य मोक्षहेतुत्वात् युक्तं सात्विकान्नजलतेजःप्रतिपादकवाक्यप्रविष्टघृतरूपपथ्यसेवनमिति वेदितव्यम्। उक्तञ्च सात्विकादिभेदेन त्रिविधमन्नम् भगवद्गीतायाम्"आयुःसत्वबलारोग्यसुखप्रीतिविवर्धनाः।रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः।कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः। यातयामं गतरसं पूति पर्य्युषितञ्च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्"इति। पथ्येष्वपि उक्तानुक्तेषु"अभ्यासकाले प्रथमं प्रशस्तं क्षीराज्यभोजनम्" इतियोगशास्त्रे पृथङ्निर्देशात् योगमारुरुक्षोः अभ्यासारम्भदशायां क्षीराज्यभोजनमवश्यविधेयम् वेदितव्यम्। क्षीरं दुग्धम् आज्यं घृतम् तद्युक्तम्भोजनम् क्षीराज्यभोजनम् शाकपार्थिवादिवत्समासः। यद्वा सति सम्भवे सति च शरीरानुकूल्ये केवलं क्षीराज्यमात्रम्भोक्तव्यमित्यर्थोवेदितव्यः। "ततोऽभ्यासे दृढ़ीभूते न तादृङ्नियमग्रहः" इतियोगशास्त्रात् अभ्यासे दृढ़ीभूते कुम्भकादिनिष्पत्ताविति भावः। तादृङ्नियमग्रहः क्षीराज्यभोजनावश्यताकं विधेयत्वं न भवतीति वेदितव्यम्। पथ्यस्यापि यथेष्टाहारो न विधेयः; किन्तु "सुस्निग्धमधुराहारश्चतुर्थांशविवर्ज्जितः। भुज्यते शिवसम्प्रीत्यै मिताहारः स उच्यते। द्वौ भागौ पूरयेदन्नैस्तोयेनैकम्प्रपूरयेत। वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत्" इत्यादियोगशास्त्रोक्तमिताहार एव विधेयः। तथाच श्रुतिः "यदात्मसम्मितमन्नन्तदवति न हिनस्ति यद् भूयो हिनस्ति तद्यत् क-

नीयो न तदवति" इति। अस्या श्रुतेरयमर्थः आत्मसम्मितं स्वकीयान्नाशयपरिमितम्पथ्यं यदन्नम्भुज्यते तदन्नमत्तारमवति रक्षति कुंभकादि निष्पादयतीतिभावः। न हिनस्ति दोषवैषम्यपदवाच्यामयं सम्पाद्य साधकं न हन्ति न पीड़यतीति भावः। यद्भूयः स्वकीयान्नाशयपरिमित्यतिक्रान्तमन्नं भुज्यते तद्धिनस्ति शूलाद्यामयमुत्पाद्य साधकं हन्ति कुम्भकादि विघटयतीत्यर्थः। यत्कनीयश्चतुर्थमवशेषयेदिति परिमितिन्यूनमत्यल्पमन्नं भुज्यते न तत्साधकमवति बुभुक्षापनोदनाय कुम्भकादिघटनाय न प्रभवतीति भावः। अथ उक्तम्भवति मिताहारो-विधेय इति। तथाचोक्तम्भगवद्गीतायाम् "नात्यश्नतस्तु योगोस्ति नचैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन। युक्ताहारविहारस्य युक्तचेष्टस्य कर्म्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा" इति अनयोरर्थः अपरिमितञ्जरयितुमशक्यमन्नमश्नतः बह्वाशिनो योगिनः योगो नास्ति योगनिष्पत्तिर्न भवति। एकान्तं नियमेन अनश्नतोऽप्यल्पमश्नतश्च योगो नास्ति। तन्निष्पत्तिर्न भवति। तथाच स्वप्नशीलस्य अत्यन्तनिद्रालोः अतिजाग्रतश्च तदसिद्धिरितिभावः तर्हि कस्य योगसिद्धिरित्याह "युक्ताहारविहारस्य" "द्वौ भागौ पूरयेदन्नैः" इति चोक्तत्वात्। अगृहस्थयोगपक्षे "न गव्यूतेः परम् गच्छेन्न ग्रामे नगरे वसेत्" इति। गृहस्थयोगपक्षे "ऋतौ भार्य्यामुपेयात्" इत्यादिशास्त्रीयव्यवस्थायाम् युक्त आहारोऽन्नम् विहारः प्रथमे विश्रान्त्यै भूमिसञ्चारः द्वितीये मर्य्यादायै धर्मपत्नीसंयमः यस्य तस्य परिमिताहारविहारस्य युक्तचेष्टस्य कर्म्मसु अन्नादानविसर्गादिशरीरयात्रासम्बन्धनीषु क्रियांसु यावता शरीरयात्रा तावत्परिमिता नतु यथेष्टा चेष्टा कायिकवाचिकमानसिकव्यापारो यस्य तस्य तथाभूतस्य युक्तस्वप्नावबोधस्य स्वप्नो निद्रा बोधो जागरणम् तौ युक्तौ परिमितौ "जागृयात् दशनाड्यस्तु निद्रा तु दशनाड़िकाः। पश्चाज्जागरणं तद्वत् दशनाड्यस्तु योगिनः" इत्युक्तलक्षणलक्षितौ स्वप्नावबोधौ यस्य तस्य योगिनः योगः दुःखहा दुःखानि आध्यात्मिकादीनि जन्मादीनि च स्वस्मिन् सिद्धात्मज्ञानेन हन्ति इति दुःखहा भवति। एतावता उक्तम्भवति योगिनः आहारविहारनिद्रावबोधचेष्टानामपरिमितत्वे रजस्तमउद्रेकः ततो योगिभिः तत्परिमितशीलैरेव भवितव्यम्। प्रसङ्गात् योगिविधेयाः परिमितविहारादयोप्यर्था अभिहिता इति वेदितव्यम्। "कुर्वन्ति योगिनः पथ्यमपथ्यं न कदाचन। एलां वापि लवङ्गं वा भोजनान्ते च



भक्षयेत् । केचित् कर्पूरमिच्छन्ति ताम्बूलं शोभनन्तथा । चूर्णेन रहितं शस्तम्पवनाभ्यासयोगिनाम्।इति चिन्तामणेर्वाक्यं स्वारस्यम्भजते नहि। केचित्पदेन यस्मात्तु तयोः शीतोष्णहेतुना" इति योगशास्त्रात् योगिभिः पथ्यमवश्यं विधेयम् सूचितम्भवति । अपथ्यञ्च अवश्याविधेयमिति योगिनाम्मुखवासनवस्तुषु भोजनान्तभक्ष्येषु एलालवङ्गञ्च देवकुसुमपदवाच्यम्पथ्यम्भवति । केचित्पदस्वारस्यानुरोधात् पैत्तिकप्रकृतिकस्य कर्पूरम्पथ्यम् कफिकप्रकृतिकस्य च उष्णगुणकं चूर्णेन रहितं ताम्बूलं पथ्यं सूचितम्भवति। यद्यपि कर्पूरयुक्तं ताम्बूलं लोकव्यवहृतंपरम्परम् शीतोष्णगुणसम्पर्कात् तत्तत्प्राबल्यप्रशान्तये अनतिशीतोष्णम्पथ्यम्भवितुमर्हति । तथापि शास्त्रीयप्रमाणानुपलब्धेः पथ्यगणनायां न गणितमिति वेदितव्यम् ।प्रायःयानि यानि वस्तूनि शास्त्रे हविष्यत्वेन परिगणितानि तानि तानि पथ्यत्वेन स्वीकर्त्तव्यानि।परन्तु क्वचित्क्वचिदंशे तयोरनेकवाक्यतापि भवति। यथा योगशास्त्रे मधु पथ्यत्वेन परिगण्यते धर्म्मशास्त्रे अहविष्यत्वेन परिगण्यते। एवमन्यत्रापि वेद्यम् २।२।९॥

## शुक्रस्य च निमित्तम् ।२।२।१०।

शुक्रस्य वीर्य्यपदवाच्यस्य रसादिपरिणतचरमधातोः च शब्दः रसादिमज्जान्तान् षड्धातूनपि गमयतीति वेदितव्यम् । निमित्तं हेतुः। अत्र पथ्यंशब्दः पूर्व्वसूत्रस्थो योजनीयः पथ्यप्रकरणस्थयोगशास्त्रे "पुष्टं सुमधुरम् धातुप्रपोषणम्पुष्टम्" इत्याद्युक्तेः युक्तम्पथ्यस्य शुक्रधातुनिमित्तत्वम् । चकारात् रसादिधातुनिमित्तत्वम् वेदितव्यम् । "अस्थिमज्जावाक्तेजसः" इतिश्रवणात् तेजोपदवाच्यघृतस्य शुक्रधात्वव्यवहितमज्जाधातुहेतुत्वम् मज्जाऽव्यवहितास्थिधातुहेतुत्वञ्च उपपन्नम्भवति । ततश्च युक्तं घृतस्य मज्जापरिणतशुक्रहेतुत्वम्।अत एव घृतसारदुग्धस्यापि उपपन्नन्तद्धेतुत्वम् । अन्यस्यापि पथ्यस्य रसादिपरिणत्या क्रमेण शुक्रहेतुत्वमस्ति परन्तु घृतस्य दुग्धस्य च तेजस्तेजोसारत्वात् अन्नाद्यपेक्षया अधिकांशेन अल्पकालेन च शुक्रजनकत्वोपपत्तेः 'शस्तं क्षीराज्यभोजनम्" इति शास्त्राच्च । घृतदुग्धभोजनम् अवश्यविधेयत्वेन अनुज्ञाप्यत इति वेदितव्यम् । "सुगन्धिर्योगिनां देहे जायते बिन्दुधारणात् । यावद्धातुःस्थिरो देहे तावत्कालभयङ्कुतः । शुक्रायत्तञ्च जीवितम्'' इत्यादियोगाभिधानात्। हितकारिशुक्रनिमित्तम्पथ्यं योगिसेव्यमित्युपपन्नम्भवति । यद्वा "सपर्य्यगाच्छुक्रमका-

यमव्रणमस्नाविरं शुद्धमपापविद्धम्" इतिश्रुत्या शुक्रशब्दात् ब्रह्म निर्दिश्यते अस्यां श्रुतौ अकायमित्यादिविशेषणानि शुक्रस्य विशिष्टस्य भवन्ति। एतानि च विशेषणानि श्रुतिस्मृतिप्रसिद्धानि ब्रह्मसम्बन्धीनि अधिगतानि भवन्ति। तस्मात् शुक्रमितिशब्दो ब्रह्मनिर्देशक इत्युपपन्नम्भवति। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवैषीकान्धैर्य्येण तम्विद्याच्छुक्रममृतम्" इति श्रुतिः अङ्गुष्ठमात्रम् अन्तरात्मानम्पुरुषं जीवपदवाच्यं सदा जनानां हृदये सन्निविष्टम् अन्तःकरणावच्छिन्नं निर्दिशति। तं जीवं स्वाच्छरीरात् आत्मत्वेनाभ्यस्तात् देहात् प्रवृहेत् पृथक्कुर्य्यात्। प्रकृत्यसंश्लिष्टं विवेचयेत्। धैर्य्येण बलवदिन्द्रियनिग्रहादिना तं विविक्तमात्मानं शुक्रं शुक्लं स्वप्रकाशमितियावत् अमृतम् कूटस्थम्ब्रह्मेतियावत् विद्यात् जानीयादिति निर्दिशति। ततोऽप्युपपन्नम्भवति शुक्रस्य ब्रह्माभिधेयत्वम् तदुपपत्तौ शुक्रस्य ब्रह्मणः चेति-पुनरर्थकमव्ययम्। निमित्तं हेतुः। तत्प्राप्तिहेतुरितियावत् युक्ताहारविहारादि ब्रह्मप्राप्तिहेतुर्योगनिष्पादनाचरणम्। अत्र पथ्यं पूर्ववद्योजनीयम्। यद्वा "शुक्रोवैश्वानरोबर्हिर्बहिः सूष्मा तनूनपात्" इति शब्दार्णवात् शुक्रशब्दः अग्निपर्य्यायत्वेन उपपद्यते इत्युपपत्तौ शुक्रस्य अग्नेः जाठराग्नेरितियावत् चकारः "यदा तु नाड़ीशुद्धिः स्यात् तदा चिह्नानि बाह्यतः। कायस्य कृशता कान्तिस्तदा जायेत निश्चितम्। यथेष्टधारणम्वायोरनलस्य प्रदीपनम्। नादाभिव्यक्तिरारोग्यञ्जायते नाड़िशोधनात्" इति योगशास्त्रोक्ताग्निदीपनसमानकालीननादाभिव्यक्तादीनि गमयतीति वेदितव्यम्। तेषामपीत्यर्थः निमित्तं हेतुः अत्र पथ्यम्पूर्व्ववद्योजनीयम्। एतावता यज्जठराग्निं दीपयति नादाभिव्यक्त्यादीनि निष्पादयति तन्नाड़ीशोधनानुकूलमाहारविहारादिपथ्यं अभ्युपगम्यत इति वेदितव्यम्। यद्वा शब्दशास्त्रात् रलयोरेकत्वस्मरणात् शुक्रशब्दात् शुक्लशब्दग्रहणमुपपद्यते "कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" इति पातञ्जलसूत्रात् तपः स्वाध्यायध्यानात्मकम् परपीड़ानुग्रहरूपबहिःसाधनासाध्यम् आभ्यन्तरसाधनीभूतं स्वच्छं धर्म्मपदवाच्यं कर्म्म शुक्लशब्देनाभिहितमुपपद्यते। इत्युपपत्तौ शुक्रस्य निरुक्तशुक्लकर्म्मणः च शब्दः अशुक्लाकृष्णम् "नैव तस्य कृतेनार्थो-नाकृतेनेह कश्चन" इति भगवदुक्तपुण्यपापाकिङ्करत्वरूपं योगारूढयोगिनः विधिनिषेधराहित्यं गमयते निमित्तं हेतुः अत्र पथ्यं तथा



योऽयम् । यद्वा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिस्मृतौ लोहितशुक्लकृष्णशब्दैः रजस्तमःसत्वानि गुणवृत्याभिधीयन्ते । रञ्जनात्मकत्वाल्लोहितं रजः। प्रकाशात्मकत्वात् शुक्लं सत्त्वम्। आवरणात्मकत्वात् कृष्णं तमः । एवं सति रलयोरेकत्वस्मरणात् शुक्रशब्दात् शुक्लपदवाच्यं सत्वमुपपद्यते इत्युपपत्तौ शुक्रस्य शुक्लपदवाच्यसत्वगुणस्य च शब्दः "गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् । जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते" इति भगवदुक्तनैर्गुण्यस्थितिं गमयति। तस्याप्रीत्यर्थः निमित्तं हेतुः। अत्र पथ्यमपूर्व्ववद्योजनीयम् । एतावता उक्तम्भवति यदाहारविहारादि सत्वगुणमाविर्भावयति रजस्तमसीतिरोभावयति नैर्गुण्यं सम्पादयति तत्पथ्यं विधेयम् । ग्रन्थविस्तारभिया "उत्साहात् साहसाद्धैर्य्यात् तत्त्वज्ञानाच्च निश्चयात् । जनसंगपरित्यागात् षड्भिर्योगः प्रसिध्यति" इत्यादियोगसाधनीभूतं कायिकं वाचिकं मानसम् आचरणं पथ्यपदवाच्यं नालेखि तत्तु स्वात्मारामादिवाक्यादवगन्तव्यं साधकैः इति वेदितव्यम् । २।२।१ ।

## तद्विपरीतमपथ्यम् ।२।२।११।

तस्मात् निरुक्तपथ्यात् विपरीतमन्यथा भूतम् आमिषप्रायं राजसतामसान्नम् अपथ्यम् । तथाचोक्तं योगशास्त्रे "कट्वम्लतीक्ष्णलवणोष्णहरीतशाकसौवीरतैलतिलसर्षपमद्यमत्स्यान् । आजादिमांसदधितक्रकुलत्थकोलपिण्याकहिंगुलशुनाद्यमपथ्यमाहुः । भोजनमहितम्विद्यात् पुनरस्योष्णीकृतं रूक्षम् अतिलवणमम्लयुक्तं कदशनशाकोत्कटंवर्ज्यम्" उक्तञ्च श्रीमता दत्तात्रेयेण "अथ वर्ज्यानि वक्ष्यामि योगविघ्नकराणि च । लवणं सर्षपञ्चाम्लमुग्रं तीक्ष्णञ्च रूक्षकम् । अतीवभोजनं त्याज्यमतिनिद्रातिभाषणम्" स्कन्दपुराणेऽपि "त्यजेत्कट्वम्ललवणम्" इति । उक्तञ्च योगशास्त्रे आहारादन्यदपि वर्ज्यमपथ्यम् "वह्निस्त्रीपथिसेवनमादौ वर्ज्जनमाचरेत्। वर्जयेद्दुर्ज्जनप्रान्तं वह्निस्त्रीपथिसेवनम् । प्रातःस्नानोपवासादिकायक्लेशविधिन्तथा" इति । अत्र आदावितिशब्देन अभ्यासकाले इत्यर्थोवेदितव्यः। अत उक्तम्भवति अभ्यासनिष्पत्तौ तु कदाचित् शीतकाले वह्निसेवनम् गृहस्थस्य ऋतौ धर्म्मपत्नीगमनम् तीर्थयात्रादौ मार्गगमनम् विहितमिति वेदितव्यम् । प्रातःस्नानोपवासादीत्यत्र आदिशब्दः फलाहारादिज्ञापक इति वेदितव्यम् । यद्यपि प्रातःस्नानाद्याचरणम् स्मृतिविहितं

धर्म्यम्प्रसिद्धम् तथापि प्रथमाभ्यासिनः प्रातःस्नाने शीतविकारकफाद्युत्पत्तेः उपवासादौ पित्ताद्युत्पत्तेः तत्तत्वर्ज्यमिति वेदितव्यम्। अभ्यासनिष्पत्तौ लोकसंग्रहार्थिना कारुणिकेन योगिना तदाचरणं न निषिद्धमिति रहस्यम् वेदितव्यम्। अत्र "अत्याहारः प्रयासश्च प्रजल्पो-नियमग्रहः। जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति" इत्यादि योगशास्त्रोक्तानि "नात्यश्नतस्तु योगोस्ति न चैकान्तमनश्नतः। न चातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन" इत्यादि भगवदुक्तानि च आचरणानि योगहानिकरत्वात् वर्ज्ज्यानि अपथ्यपङ्क्तिगतानि परिगणनीयानीति वेदितव्यम् ॥२।२।११।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

## विनापि तेभ्यः पूर्व्वसम्पादितक्षेत्रसंस्कारात् २।३।१

तेभ्यः यमनियमपथ्येभ्यो विनापि पूर्व्वसम्पादितक्षेत्रसंस्कारात् अभ्यासारम्भकालात् पूर्व्वं विद्यमानजन्मनि व्यतीतजन्मनि वा तपःस्वाध्यायेश्वरप्रणिधानात्मकक्रियायोगेन सम्पादितात् निष्पादितात् क्षेत्रसंस्कारात् "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः। इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः। एतत्क्षेत्रं समासेन सविकारमुदाहृतम्" इतिभगवदुक्तक्षेत्रस्य साङ्ख्यसम्मतचतुर्विंशतितत्त्वरूपस्य इच्छाद्वेषादिधर्मवतः शरीरत्रयस्य संस्कारात् परिशोधनात् अत्र योगो निष्पद्यत इतियोजनीयम्। उक्तञ्च तथा श्रीपतञ्जलिना "स हि क्रियायोगः समाधिभावनार्थः क्लेशतनूकरणार्थश्च" इति सूत्रेण क्रियायोगद्वारा क्लेशतनूकरणरूपक्षेत्रसंस्कारं समाधिभावं च निरूप्य योगनिष्पत्तिर्निरूप्यतइति वेदितव्यम्। दृश्यतेऽपि लोके हलकर्षणतृणापनयनगोमयभस्मपातनादिभिः संस्कृतक्षेत्रे विनापि पौनःपुन्येन सेचनादिप्रयासैः बीजवपनात् शस्यनिष्पत्तिः। तथाच विनापि यमादिभिः क्रियागोगात् क्षेत्रे शरीररूपे संस्कृते सति अविमुक्तसेवनादिरूपसाधनैरेव योगनिष्पतिः सिद्ध्यतीतिवेदितव्यम् ।२।३।१।

## जन्मान्तरकृताभ्यासवाहुल्याद्वा २।३।२

अत्र सूत्रादौ विनापि तेभ्यः इति पुरस्ताद्योजनीयम् जन्मान्तरकृ-

ताभ्यासवाहुल्यात् विद्यमानजन्मनः प्राक्तनजन्मसु कृताभ्यासाधिक्यात् वा शब्दो वैकल्पिकोवेदितव्यः। अत्रपूर्व्ववदेव योगोनिष्पद्यते इति योजनीयम् "अनेकजन्मसंसिद्धस्ततोयाति परां गतिम्" इत्यादिभगवद्वाक्यैः जन्मान्तरकृताभ्यासात् योगनिष्पत्तिरुपपद्यते। अधिगम्यते च पुराणादिषु शुकादीनाम् जन्मत एव योगनिष्पत्तिः। तथाहि "जैगीषव्यो यथा विप्रो यथाचैवोषितादयः। क्षत्रिया जनकाद्यास्तु वलाधारादयो विशः। सम्प्राप्ता योगसंसिद्धिं पूर्व्वाभ्यस्तस्वयोगतः। धर्म्मव्याधादयः सप्त शूद्राः पैलवकादयः। मैत्रेयी सुलभा शार्ङ्गी शाण्डिली च तपस्विनी। एते चान्ये च वहवो नीचयोनिगता अपि। ज्ञाननिष्ठां परां प्राप्ताः पूर्व्वाभ्यस्तस्वयोगतः" इत्यादिस्मरणञ्च।२।३।२।

## अभ्यासे सिद्धासनम् २।३।३

अभ्यासे अभ्यासकाले सिद्धासनम् सिद्धाख्यम् आस्ते अस्मिन् आस्यते अनेनेति वा आसनम् योगाङ्गीभूतम् अत्र विधेयमितियोजनीयम् उक्तञ्च तत्स्वरूपं योगशास्त्रे "योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत्। मेढ्रे पादमथैकमेव हृदये कृत्वा हनुं सुस्थिरम्। स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्भ्रुवोरन्तरम्। ह्येतन्मोक्षकपाटभेदजनकं सिद्धासनम्प्रोच्यते" इदम्मत्स्येन्द्रसम्मतं सिद्धासनम् अन्यसम्मतं प्रकारान्तरेणोक्तं योगशास्त्रे "मेढ्रादुपरि संस्थाप्य सव्यं गुल्फन्तथोपरि। गुल्फान्तरञ्च निक्षिप्य सिद्धासनमिदम्भवेत्। एतत् सिद्धासनम्प्राहुरन्ये वज्रासनम्विदुः। मुक्तासनम्वदन्त्येके प्राहुर्गुप्तासनं परे" इति आसनाभिज्ञाः। यत्र वामपादपार्ष्णिंयोनिस्थाने नियोज्य दक्षिणपादपार्ष्णिंमेढ्रादुपरि स्थाप्यते तत्सिद्धासनम्। यत्र दक्षिणपादपार्ष्णिर्योनिस्थाने नियोज्य वामपादपार्ष्णिमेढ्रादुपरि स्थाप्यते तद्वज्रासनम्। यत्र तु दक्षिणसव्यपार्ष्णिद्वयमुपर्य्यधोभागेन संयोज्य योनिस्थानेन संयोज्यते तन्मुक्तासनम्। यत्र च पूर्व्ववत् संयुक्तं पार्ष्णिद्वयं मेढ्रादुपरि निधीयते तद्गुप्तासनमिति। उक्तञ्च योगशास्त्रे सर्व्वासनेभ्यः सिद्धासनस्यौत्कृष्ट्यम् अभ्यासे तद्विधेयत्वञ्च "चतुरशीत्यासनानि शिवेन कथितानि च। तेभ्यश्चतुष्कमादाय सारभूतम्ब्रवीम्यहम्। सिद्धम्पद्मं तथा सिंहं भद्रञ्चेति चतुष्टयम्। श्रेष्ठं तत्रापि च सुखे तिष्ठेत् सिद्धासने सदा। यमेष्विव मिताहारमहिंसां नियमेष्विव। मुख्यं सर्व्वासनेष्वेकं सिद्धाः सिद्धासनम्विदुः। चतुरशीतिपीठेषु सिद्ध-

मेव सदाभ्यसेत् । द्वासप्ततिसहस्राणां नाडीनाम्मलशोधनम्” इति । अपिचोक्तं योगशास्त्रे योगान्तराभ्यासमन्तरेणापि सिद्धासनाभ्यासमात्रेण योगसिद्धिः“आत्मध्यायी मिताहारी यावद्द्वादशवत्सरम्।सदासिद्धासनाभ्यासाद्योगी निष्पत्तिमाप्नुयात्” उक्तञ्च योगशास्त्रे सामान्येनआसनाभ्यासफलम्“कुर्य्यात्तदासनं स्थैर्य्यमारोग्यञ्चाङ्गलाघवम्” इति तदासनम्“आसनेन रजोहन्ति”इति योगवाक्यात् देहस्य मनसश्च चाञ्चल्यरूपरजोधर्म्मनाशकत्वेन स्थिरतामारोग्यं धातुरसकरणसाम्यमङ्गानां लाघवं लघुत्वम् कुर्य्यात्। गौरवरूपतमोधर्म्मनाशकत्वमप्यनेनोक्तम्। चकारात् क्षुद्बाधादिकमपि बोध्यम्“द्वन्द्वानभिघातः”इतियोगशास्त्रीयवाक्यात् आसनसिद्धिसाधकानां शीतोष्णादिद्वन्द्वैरनभिभवो भवतीति वेदितव्यम्।उक्तञ्च विशेषेण सिद्धासनाभ्यासफलम् योगशास्त्रे “किमन्यैर्बहुभिः पीठैः सिद्धे सिद्धासने सति । प्राणानिले सावधाने बद्धे केवलकुम्भके।उत्पद्यते निरायासात् स्वयमेवोन्मनीकला ।तथैकस्मिन्नेव दृढे सिद्धे सिद्धासने सति।बन्धत्रयमनायासात् स्वयमेवोपजायते” इति। उक्तञ्च पातञ्जलयोगसूत्रे आसनसिद्धिनिमित्तीभूतमुपायद्वयम्“प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्” इतिसूत्रेण अस्य भावः प्रयत्नोपरमात् सिद्ध्यत्यासनम् येन नाङ्गमेजयत्वम्भवति । अनन्ते च समापन्नञ्चित्तमासनं सम्पादयतीति । उक्तञ्च आसनसिद्धौ प्राणायामसिद्धिफलम् तत्रैव योगशास्त्रे“तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥२।३।३॥

## पद्मस्वस्तिके वापि ।२।३।४।

अत्र सूत्रादौ अभ्यासे इति पुरस्ताद्योजनीयम् पद्मस्वस्तिके पद्मासनस्वस्तिकासने, वेति वैकल्पिकमव्ययपदम् अपीति समुच्चयेऽव्ययपदम् पूर्व्वनिर्द्दिष्टसिद्धासनेन सार्द्धं पद्मासनस्वस्तिकासने समुच्चिनोति अत्र विधेये इति योजनीयम्। उक्तञ्च पद्मासनस्वस्तिकासनस्वरूपम् क्रमेण योगशास्त्रे “वामोरूपरि दक्षिणञ्च चरणं संस्थाप्य वामन्तथा । दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् । अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेत्। एतद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यते” मत्स्येन्द्रनाथाभिमतम् पद्मासनम् प्रकारान्तरेणाभिधीयते“उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः। ऊरुमध्ये तथोत्तानौ पाणी कृत्वा ततो दृशौ। नासाग्रे विन्यसेद्राजदन्त-

मूले तु जिह्वया। उत्तभ्य चिवुकं वक्षस्युत्थाप्य पवनं शनैः। इदं पद्मासनम्प्रोक्तं सर्व्वव्याधिविनाशनम्। दुर्ल्लभं येन केनापि धीमता लभ्यते भुवि"इति आसनाभिज्ञा यत्र हस्ताभ्याम् अर्थात् करग्रहणपूर्व्वकम् पद्मासनम् बद्धपदविशिष्टं वदन्ति। तदितरत् तदविशिष्टमिति-वेदितव्यम्। "जानूर्व्वोरन्तरे सम्यक् कृत्वा पादतले उभे। ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते""उरूजंघान्तरादाय प्रपदे जानुमध्यगे। योगिनो यदवस्थानं स्वस्तिकं तद्विदुर्बुधाः"इति"पद्मकं स्वस्तिकम्वापि भद्रासनमथापि वा। वध्वा योगासनं सम्यगुत्तराभिमुखस्थितः"इत्यादियोगशास्त्रीयवाक्यैरनयोरासनयोर्विधेयत्वम् दृश्यते इति वेदितव्यम् ॥२।३।४॥

## विश्रामे च शवासनम् ।२।३।५।

विश्रामे योगाभ्यासजनितश्रमापनोदने। चशब्दः अभ्यासकालम् व्यावर्त्तयति विश्रामकालमनुवर्त्तयतीति वेदितव्यम्। शवासनम् शवाख्यमासनम्। अत्र विधेयमिति योजनीयम्। "उत्तानं शववद्भूमौ शयनन्तच्छवासनम्। शवासनम् श्रान्तिहरं चित्तविश्रान्तिकारकम्"इतियोगशास्त्रात् शवासनस्वरूपम् तदनुष्ठानफलञ्च समभिधीयत इतिवेदितव्यम्।यद्यपि"आसनानि च तावन्ति यावन्त्योजीवजातयः। एतेषामखिलान्भेदान् विजानाति महेश्वरः। चतुरशीतिलक्षाणि एकैकं समुदाहृतम्। ततः शिवेन पीठानां षोड़शानां शतं कृतम्"इति-गोरक्षवाक्यात् "चतुरशीत्यासनानि शिवेन कथितानि च"इतिस्वात्मारामवाक्याच्च चतुरशीतिलक्षसंख्यया षोड़शशतसंख्यया चतुरशीतिसंख्यया च आसनानि मुख्यगौणभेदेन परिगणितानि तथाप्यत्र श्रीमान् गुरुवरःसूत्रकारः कारुण्यपूरितहृदयः सूत्रत्रयेण परमोपयोगीनि मुख्यतमानि चतुःसंख्यकानि सिद्धपद्मस्वस्तिकशवाह्वयान्यासनानि समुदाजहारेति वेदितव्यम्। प्रसङ्गात् श्रमजातजलेन गात्रमर्द्दनविधानं तत्फलञ्च योगशास्त्रोक्तम् व्यपदिश्यते "जलेन श्रमजातेन गात्रमर्द्दनमाचरेत्। दृढ़ता लघुता चैव तेन गात्रस्य जायते"इतिवाक्यात् ।२।३।५।

## नाविश्रान्तेन किमप्यनुष्ठेयम् ।२।३।६।

नेति निषेधार्थकमव्ययम्। अविश्रान्तेन परिश्रान्तेन। अत्र साधकेनेति योजनीयम्। किमपि सुकरदुष्करव्यापारमात्रम् नाचरणीयम्

अभ्यासी साधकः श्रान्तः सन् विश्रामपर्य्यन्तम् न किमपि कार्य्यङ्कुर्य्यादित्यर्थः। यश्च साधकः दीर्घकालनैरन्तर्य्याभ्यासपाटवेन अतिक्रान्ताभ्यासनिबन्धनशान्तिर्भवति न तस्याभ्यसनावसानाव्यवहितोत्तरकालेऽपि व्युत्थानदशायाम् व्यापारनिषेध इतिरहस्यम् वेदितव्यम्। अपिच अभ्यासिना सर्व्वदापि श्रमजननानुकूलोव्यापारः प्रयासपदवाच्योयोगविघ्नकरत्वादननुष्ठेय एवेतिवेदितव्यम्। "अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः। जनसंघश्च लौल्यञ्च षडभिर्योगोविनश्यति" इतियोगशास्त्रात्। तथासति अभ्यासजनितश्रमोऽपि श्रमत्वसामान्यात् योगविघ्नकरत्वेनोपपद्यते। ततः तदविधेयत्वमप्युपपद्यते "संविदं लभतेऽभ्यासात् योगोऽभ्यासात्प्रवर्त्तते। मुद्राणां सिद्धिरभ्यासादभ्यासाद्वायुसाधनम्। कालवञ्चनमभ्यासात् तथामृत्युञ्जयोभवेत्। वाक्सिद्धिः कामचारित्वम् भवेदभ्यासयोगतः। तस्मादभ्यसनं नित्यं कर्त्तव्यम्मोक्षकाङ्क्षिभिः। अभ्यासाज्जायते सिद्धिरभ्यासान्मोक्षमाप्नुयात्" इत्यादियोगशास्त्रात् अभ्यासस्य योगनिष्पत्तिहेतुत्वात् योगिनां तस्य अवश्यविधेयत्वं सूचितम्भवति। अभ्यासजनितश्रमोपि विधेय एवेतिसूचितम्भवति। एवमभ्यासजनितश्रमस्य निषेधविधिरूपकोटिद्वयपातित्वात् योगिभिः अभ्यासनिबन्धनं श्रमम् स्वीकृत्य तदपनोदनाय विश्रामपर्य्यन्तं श्रमावहम् न व्यापारमात्रङ्कर्त्तव्यम् वेदितव्यम्। कुसंयोगात् शवासनाऽसम्भवत्वेऽपि येन केन प्रकारेण विश्रामं लब्ध्वैव व्यापारङ्कुर्य्यादित्यर्थः ॥२।३।६

## अन्यथा व्याधिसम्भवः ।२।३।७

अन्यथा अविश्रान्तेन साधकेन कस्मिंश्चिदपि व्यापारमात्रे अनुष्ठिते सति व्याधिसम्भवः रोगसमुत्पत्तिः। अत्र जायते इतियोजनीयम्। "दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः" इतिपातञ्जलयोगसूत्रेण श्वासप्रश्वासयोर्विक्षेपसहभवनम् सूचितम्भवति। श्वासप्रश्वासौ च श्रान्तिसमकालीनौ श्रान्तिजन्यौ लोके दृश्येते। ततः श्रान्तेरपि विक्षेपसहभवनम् व्यज्यते। विक्षेपसहभूतपरिगणनायाञ्च श्रमसचिवश्वासप्रश्वासाभ्यां सार्द्धं दुःखदौर्मनस्याङ्गमेजयत्वानि निरुक्तपातञ्जलसूत्रेणावगम्यन्ते। तेषांदुःखादीनां सहभवनसामान्यात् तैः सह शान्तिसहभवनोपपत्तौ च श्रान्तौ जातायां दुःखपदवाच्यप्रसिद्धरोगसमुत्पत्तिरुपपद्यते। श्रान्तिसद्भावे विश्रान्तिमनपेक्ष्य पुन-

र्व्यापारानुष्ठानेन नितरां श्रमसद्भावे अतिशयेन रोगसमुत्पत्तिरुपपन्नेति वेदितव्यम्। दृश्यतेऽपि लोके विश्रान्तिमनपेक्ष्य व्यवायजलावगाहनातपपरिभ्रमणादिकृतश्रमशालिनां जनानाम् रोगसमुत्पत्तिः। ततोऽन्यथा व्याधिसम्भव इतिनिरुक्तसूत्ररूपा श्रीमत्सूत्रकारोक्तिरुपपन्नेतिवेदितव्यम् ॥२।३।७।

## देशम्पूतमनापदम् २।३।८।

देशं योगाभ्यसनस्थानम् पूतम्पवित्रम् गोमयादिलिप्तमितियावत्। यद्वा धार्म्मिकम् तीर्थक्षेत्राश्रमादिरूपम् अनापदम् चोरव्याघ्राद्युपद्रवरहितम् अत्र योगिनोऽधितिष्ठेयुरिति योजनीयम्। तथाचोक्तं योगशास्त्रे "सुराज्ये धार्म्मिके देशे सुभिक्षे निरुपद्रवे। धनुःप्रमाणपर्य्यन्तम् शिलाग्निजलवर्ज्जिते। एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना" "अल्पद्वारमरन्ध्रगर्त्तविवरं नात्युच्चनीचायतम्। सम्यग्गोमयसान्द्रलिप्तममलम् निःशेषजन्तूज्झितम्। बाह्ये मण्डपवेदिकूपरुचिरम् प्राकारसम्वेष्टितम्। प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः" इति नन्दिकेश्वरपुराणेत्वेवं योगाभ्यासस्थानलक्षणमुक्तम् "मन्दिरं रम्यविन्यासं मनोज्ञं गन्धवासितम्। धूपामोदादिसुरभि कुसुमोत्करमण्डितम्। मुनितीर्थनदीवृक्षपद्मिनीशैलशोभितम्। चित्रकर्म्मनिबद्धञ्च चित्रभेदविचित्रितम्। कुर्य्याद्योगगृहं धीमान् सुरम्यं शुभवर्त्मना। दृष्ट्वा चित्रगताञ्छान्तान् मुनीन् याति मनःशमम्। सिद्धान् दृष्ट्वा चित्रगतान् मतिरभ्युदये भवेत्। मध्ये योगगृहस्याथ लिखेत् संसारमण्डलम्। श्मशानञ्च महाघोरं नरकांश्च लिखेत् क्वचित्। तान् दृष्ट्वा भीषणाकारान् संसारे सारवर्ज्जिते। अनवसादो भवति योगी सिद्ध्यभिलाषुकः। पश्यंश्चबाधितान् जन्तून् नतान्मत्ताँश्चलद्व्रणान्" इति ॥२।३।८।

श्रीमान् गुरुवरः सूत्रकारः पुनरपि योग्यधिष्ठेयं स्थानं विशिनष्टि-

## निर्ज्जनं सुखसेव्यम् २।३।९

निर्ज्जनम् एकान्तम् जनसमागमाभावात् कलहादिरहितमितियावत् जनसमागमेन कलहादिकं विक्षेपनिमित्तीभूतम् योगविघ्नकरं स्यादेव तदुक्तं श्रीमद्भागवते "वासे बहूनां कलहोभवेद्वार्त्ता द्वयोरपि" इति। सुखसेव्यम् पूर्व्वोक्तैः अरन्ध्रगर्त्तविवरम् निःशेषजन्तूज्झितम् नात्युच्चनीचायतम् रम्यविन्यासम् मनोज्ञम् गन्धवासितम् धूपामोदादि

सुरभि कुसुमोत्करमण्डितम् इत्यादिविशेषणैः योगाभ्यासदेशस्य सुख सेव्यत्वमुपपन्नमितिवेदितव्यम् ।२।३।६।

## उपवेशनम् कुशवाससैणादीनि ।२।३।१०।

उपविश्यते अस्मिन् अनेनेति वा उपवेशनम् आसनम् । कुशवास सैणादीनि । कुशः दर्भपवित्रादिपदवाच्यः तृणविशेषः । वासः वस्त्रम् । ऐणम् एणाख्यचारुनेत्रमृगविशेषचर्म्म । आदिपदेन कम्बलव्याघ्रचर्म्म-पत्रादीनि गृह्यन्ते । तानि तथाभूतानि अत्र निर्म्मीयन्ते इतियोजनीयम्। उपवेशनानीतिबहुवचनप्रयोगस्थले उपवेशनमित्येकवचनम् जातावेक-वचनमितिशब्दशास्त्रानुमत्या उपवेशनत्वरूपजातिपरमितिवेदितव्यम्। कुशादिभिरासनानि विधीयन्ते इत्यर्थोवेदितव्यः। तथाचोक्तं शिवगी-तायाम् "सर्व्वान् कामानवाप्नोति मनुष्यः कम्बलासने । कृष्णाजिने भवेन्मुक्तिर्मोक्षश्रीर्व्याघ्रचर्म्मणि।कुशासनेभवेज्ज्ञानमारोग्यम्पत्रनिर्म्मिते । पाषाणे दुःखमाप्नोति काष्ठे नानाविधाङ्गदान् । वस्त्रेण श्रियमाप्नोति भूमौ मन्त्रो न सिध्यति" इति । तथाचोक्तम्भगवद्गीतायाम् "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशो-त्तरम्" इति शुचौ मार्ज्जनप्रोक्षणादिक्रियया स्वभावेन वा शुद्धे विजने देशे प्रदेशे नदीतीरगुहादावात्मनः स्वस्यैव ध्यानयोग्यमासनं नात्युच्छ्रितमत्यौन्नत्यरहितम् अत्युन्नतत्वे क्वचित्पारवश्येन चलनपत-नादिविघ्नप्रसङ्गात्। नातितुङ्गम् नातिनीचमतिनिम्नञ्च तथात्वे शैत्यौ-ष्ण्यपाषाणादिघर्षणक्लेशप्रसङ्गात् । ततस्तदुभयविलक्षणम् तत्रापि चैलाजिनकुशोत्तरम् । चैलम् वस्त्रम् । अजिनम् वैयाघ्रम् वा चर्म । कुशा दर्भाः उत्तरम् उपर्य्युपरि व्युत्क्रमेण यस्य तत्तथाभूतम् अधः कुशैः ततः अजिनेन ततोवस्त्रेण आच्छादितमितियावत्।वस्त्रं यद्यपि स्मृत्या निषिद्धम् "वस्त्रं दारिद्यदुःखाय दारु रोगाय चोपलम्" इति तथापि "वस्त्रेण श्रियमाप्नोति" इतिशिवगीतावचनात् तत् कर्म्मकाण्ड-विषयम् नचोपासकयोगिविषयमिति द्रष्टव्यम्। ध्याता स्वस्यैवमासनम-चलम् स्थिरम् निश्चलम् यथा स्यात्तथा प्रतिष्ठाप्य कल्पयित्वेत्यर्थः योगं युञ्ज्यादिति तत्रत्यपश्चिमश्लोकान्तरादन्वेतव्यम्। एकत्र कुशवस्त्र चर्म्मकम्बलपत्रादिभिःपार्थक्येन आसनकल्पना विधीयते अन्यत्र तु चैलाजिनकुशैः समवेतैरेव तत्कल्पना स्मर्य्यते । तत्र सामान्यतः पूर्व्व-कल्पो विधीयते। विशेषतश्च सुखानुभवहेतुत्वेन ध्यानसौकार्येण योग-

सिद्धिकरत्वात् पश्चिमकल्पोविधीयते इतिवेदितव्यम्। तत्र योग्यतानुसारेण उभयकल्पयोरेकतरोऽभ्युपगन्तव्यः। न तत्र कश्चिद्विरोध इतिवेदितव्यम्। अत्र श्रीमद्भगवद्युक्त्या पूर्व्वसूत्रनिर्द्दिष्टोयोगाऽभ्यसनदेशोऽपि प्रसङ्गात् सूत्रकारोक्तिस्वारस्यानुसारेण निर्द्दिष्टः सूत्रकारसम्मतिम्पोषयतीतिवेदितव्यम् ॥२।३।१०।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्म्मकृतभाष्ये द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ॥

## ततश्चान्तर्नाड्यामपानप्रवेशः । २ । ४ । १ ।

ततः पूर्व्वनिर्द्दिष्टाविमुक्तसेवनाद्यभ्यासानन्तरम् । चेति पुनरर्थकमव्ययम्। अन्तर्नाड्याम् ईड़ापिङ्गलयोर्मध्यस्थायाम् सुषुम्नायाम् अपानप्रवेशः अपानस्य अधोगतिकस्य गुदस्थितस्य वायोः प्रवेशः अन्तर्गमनम्। अत्र भवतीति योजनीयम्। उक्तञ्च योगशास्त्रे "विधिवत्प्राणसंयामैर्नाड़ीचक्रेविशोधिते। सुषुम्ना वदनम्भित्वा सुखं विशति मारुतः" इति "अपाने ऊर्ध्वगे जाते प्रयाते वह्निमण्डलम्" इत्याद्युक्तिरपि तत्र अपानप्रवेशम् उपपादयतीतिवेदितव्यम् ॥२।४।१।

## स च चक्रभेदस्य निमित्तम् । २ । ४ । २ ।

स अपानप्रवेशः चेतिकुण्डलनीबोधादि समुच्चिनोति चक्रभेदस्य मूलाधारादिचक्राणाम् भेदस्य स्फुटनस्य निमित्तम् हेतुः। अत्र भवतीति योजनीयम्। उक्तञ्च योगशास्त्रे "वायुस्तत्र प्रविश्याजगून्थिम्भित्वाऽजपंकजम्। करोत्यूर्ध्वमुखं तस्मिन् प्रविष्टयन्तरथध्वनिः। क्रमान्मेघनिनादाभो जायते तेन बुध्यते" इति। तेन बुध्यते अत्र तेन शब्दोत्तरे कुण्डलनीपदम् अध्याहार्य्यम् ततः अन्तर्नाड्यामपानप्रवेशात् कुण्डनीबोध उपपद्यते। उक्तञ्च शिवसंहितायाम् "सुप्ता गुरुप्रसादेन यदा जागर्त्ति कुण्डली। तदा सर्व्वाणि पद्मानि भिद्यन्ते ग्रन्थयोपि च" इति। अपि चोक्तमीश्वरमीननाथसम्बादे "यदा परिचये शक्तिश्चलितोर्ध्वमुपैति खम्। षट्चक्राणि क्रमाद्भित्वा तदा स्युरणिमादयः। पुरा गून्थित्रयम्भित्वा यात्यूर्ध्वं मरुतोरगी। स्फुटन्ति पृष्ठवंशास्थिगून्थयो योगिनस्तदा। वायुस्तदैव सर्व्वाङ्गे लीनोभवति संजितः। धीरैः केवलकुम्भस्स उच्यते सर्व्वसिद्धिदः। मूलाधारे यदापानो भित्वोर्ध्वं याति वेगतः। तदातीता

नागतज्ञो योगी भवति मद्विधः। क्षितिं भित्वोर्ध्वगा प्रानक्षोभिता स्याद्य- दोरगी। तदा नादोत्पत्तिरस्य जायते योगिनो हृदि" इत्यादि ब्रह्ममुद्राव- ज्ञेत्यादिसंज्ञकद्वात्रिंशत् गुन्थीनां भेदनफलानि क्रमेणाभिहितानि तानि चात्र ग्रन्थविस्तारभिया न लिखितानि सनातनसिद्धान्ते ईश्वर- पितामहसम्वादात् तदवगतिः मुमुक्षुभिः कार्य्येत्यवगन्तव्यम्।२।४।२।

## नादाभिव्यक्तेश्च ।२।४।३।

नादाभिव्यक्तेः शब्दाविर्भावस्य। चेति पुनरर्थकमव्ययम्। अत्र सनि- मित्तम्भवतीति योजनीम्। आनप्रवेशो नादमभिव्यनक्तीत्यर्थः। तथा- चोक्तं योगशास्त्रे "सोऽन्तरात्मा तदा देवो नादात्माजायते स्वयम्। यथा संस्थानभेदेन स भूयो वर्णतां गतः। वायुना प्रेर्य्यमाणोऽसौ पिण्डा- द्व्यक्तिः प्रजायते" इति। तथा चोक्तं श्रीमद्भागवते "स एष जीवो वि- वरप्रसूतिः प्राणेन घोषेन गुहाम्प्रविष्टः। मनोमयं सूक्ष्ममुपेत्य रूपम् मात्रा स्वरो वर्ण इति स्थविष्ठः" इति अस्यार्थः स एषोऽपरोक्षः जीव- यतीति जीवः परमेश्वरः अपरोक्षत्वे हेतुः विवरेष्वाधारादिचक्रेषु प्रसूतिरिव प्रसूतिरभिव्यक्तिर्यस्य स तथाभूतः तामेवाभिव्यक्ति- माह–घोषेणेति। घोषेण पराख्येन नादवता प्राणेन सह गुहामाधारच- क्रम्प्रविष्टः सन् मनोमयं सूक्ष्मं रूपम् पश्यन्त्याख्यम् मध्यमाख्यम् च मणिपूरचक्रे विशुद्धचक्रे चोपेत्य प्राप्य वक्त्रे मात्राह्रस्वादिः स्वर उदात्तादिः वर्णः ककारादिरित्येवम् वैखर्य्याख्यः स्थविष्ठोऽतिस्थू- लो नानावेदशाखात्मको भवति। तथा च श्रुतिः "चत्वारि वाक्परिमि- तपदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति। अस्याः श्रुतेरर्थः वाक्- परिमितानि वाचः परिमितानि शास्त्रनिर्णीतानि चत्वारि पदानि स्थानानि परा पश्यन्ती मध्यमा वैखरीति तानि च ये ब्राह्मणा मनी- षिणोऽध्यात्मकुशलास्ते विदुः तेषाम्मध्ये त्रीणि पदानि गुहायां शरीरे आधारनाभिहृदयेषु निहितानि नेङ्गयन्ति न जानन्ति तुरीयं चतुर्थं वैखर्य्याख्यम् मनुष्या वदन्ति मनुष्याणाम्वदने वर्त्तमानोऽर्थबोधकः शब्दो भवतीत्यर्थः। अभियुक्तश्लोकश्च "यासामित्रावरुणसदनादुच्च- रन्ती त्रिषष्टिम् वर्णानन्तः प्रकटकरणैः प्राणसङ्गात्प्रसूते। ताम्पश्यन्ती- म्प्रथममुदिताम् मध्यमां बुद्धिसंस्थाम् वाचम्वक्त्रेकरणविशदाम्वै- खरीञ्च प्रपद्ये" इति। श्लोकार्थश्च तां त्रिविधाम्भारतीम्प्रपद्ये या

सा भारती मित्रावरुणसदनात् अग्निसोमस्थानात् उच्चरन्ती उद्भवन्ती मित्रोऽग्निर्वरुणः सोमः तयोः सदनमावासस्थानम् परमात्मा यतः श्वासस्य शीतोष्णत्वम् तस्मादुच्चरन्ती त्रिषष्टिवर्णान् जनयति अइउवर्णा ह्रस्वदीर्घप्लुतभेदेन त्रिविधा नव ऋकारः प्लुतहीनो द्विविधः लृकारो-द्विविधो दीर्घहीनः सन्ध्यक्षराणि ह्रस्वहीनान्यष्ट एवमेकविंशतिः स्वराः स्पर्शाः पञ्चविंशतिः कादयो मान्ताः यादयोऽष्टावन्तस्था ऊष्माणश्च अनुनासिकाः पञ्च अनुस्वारविसर्गौ जिह्वामूलीयोपध्मानीयौ चेति त्रिषष्टिः एतान् वर्णान् वायुसङ्गजान् प्रकटकरणैर्बुद्धिंगतैः प्रत्यक्षरूपैरिन्द्रियैरन्तःपश्यति न तूच्चारयति सा पश्यन्त्याख्या तां प्रथममुदितामुत्पन्नाम्बुद्धिसंस्थामुच्चारयामीतिविचारयुक्ताम् मध्यमाम् मुखेऽवस्थितां करणविशदां स्थानप्रयत्ननिर्म्मलाम् वैखरीञ्च प्रपद्ये इति। तथा चोक्तं योगशास्त्रे "सूक्ष्मा कुण्डलनी मध्ये ज्योतिर्मात्रस्वरूपिणी अश्रोत्रविषया तस्मादुद्गच्छन्त्यूर्ध्वगामिनी। स्वयम्प्रकाशा पश्यन्ती सुषुम्नामाश्रिता भवेत्। सैव हृत्पाङ्कजम्प्राप्य मध्यमा नादरूपिणी। ततः सङ्कल्पमात्रा स्यादभिव्यक्तोर्ध्वगामिनी। सैवोरःकण्ठतालुस्था शिरोघ्राणोदरस्थिता। जिह्वामूलौष्ठनिश्वासरूपवत्वपरिग्रहा। शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी" इति। तत्र परा पश्यन्ती मध्यमा वाक् योगिभिरेवाध्यात्मकुशलैरवगम्या भवति। वैखरी तु सर्व्वैरवगम्यत इतिवेदितव्यम्। "तानि विदुर्ब्राह्मणा ये मनीषिणः" इत्यादिश्रुतिभिः परादिवाक्त्रितयी योगिभिरेवावगम्येत्युपपन्नम्भवति "अनाहतन्तु यच्छब्दं तस्य शब्दस्य यत्परम्। तत्परञ्चिन्तयेद्यस्तु स योगी छिन्नसंशयः" इति ध्यानोपनिषद्वाक्यात् "नादाभिव्यक्तिरारोग्यं जायते नाड़िशोनात्" "शुद्धसुषुम्नासरणौ स्फुटममलः श्रूयते शब्दः" इत्यादिस्वात्मारामवाक्यात् "भ्रुवोर्मध्ये पद्ममेकं द्विदलन्तत्र शोभितम्। हंस अक्षरसंयुक्तं वर्त्तते वायुमण्डले। तन्मध्ये त्वात्मज्योतिश्च शिखरे तु विराजते। नीवारशूकवत्तन्वी पीता भास्वत्यनूपमा" इत्यादिकपिलगीतावाक्याच्च। योगिनां साधारणजनानवाप्या अनाहतादिचक्रे नादाभिव्यक्तिरुपपद्यत इति वेदितव्यम्। शब्दब्रह्मैव परानाम शब्दावस्था सैव चैतन्यरूपा कुण्डनीशक्तिपदवाच्या भवति सैव शक्तिः पश्यन्त्यादिपदवाच्या वेदादिरूपिणी भवतीतिशब्दक्रमो वेदितव्यः। तथाच स्मर्य्यते "शक्तिस्ततो ध्वनिस्तस्मात् नादस्तस्मान्निरोधिका। ततोऽर्धेन्दुस्ततोबिन्दुस्तस्मादासीत्परा ततः। पश्यन्ती मध्यमा वाक् च वै-

खरी सर्व्वजन्मभूः" इति। तत्र सत्त्वप्रतिष्ठा चिच्छक्तिपदवाच्या भवति। सा चाभ्यासशालिनः पुरुषस्य स्फोटरूपेणोपलभ्यमाना ध्वनिपदवाच्या भवति। सैव सत्त्वप्रतिष्ठा रजोगुणानुविद्धा नादपदवाच्या व्यक्तावस्था भवति। सैव तमःप्रचुरा निरोधिकाशब्दवाच्या भवति। सैव सत्त्वानुविद्धा अर्धेन्दुपदवाच्या भवति। अर्धेन्दुद्वयसम्बन्धात् बिन्दुपदवाच्या भवति। अयमेव बिन्दुर्मूलाधारेऽभिव्यज्यमानः परा स्वाधिष्ठाने पश्यन्ती हृदि मध्यमा जिह्वायां वैखरीत्यभिधीयते इति शास्त्रसम्मतिर्वेदितव्या मुमुक्षुभिः साधकैः। उक्तञ्च नादश्रवणफले योगशास्त्रे "बद्धन्तु नादबन्धेन मनः संत्यक्तचापलम्। प्रयाति सुतरां स्थैर्य्यं छिन्नपक्षः खगो यथा। नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते। अन्तरङ्गकुरङ्गस्य बधे व्याधायते पि च। बद्धं विमुक्तचाञ्चल्यं नादगन्धकजारणात्। मनःपारदमाप्नोति निरालम्बाख्यखेटनम्। नाद श्रवणतः क्षिप्रमन्तरङ्गभुजङ्गमः। विस्मृत्य सर्व्वमेकाग्रः कुत्रचिन्नहि धावति" इत्यादि शतसहस्रशःयोगोक्तिभिः नादाभिव्यक्तिः चित्तं स्थिरीकृत्य एकाग्रताभूमिं समाधिं सम्पादयतीत्युक्तम्भवति। "अनाहतस्य शब्दस्य ध्वनिर्य उपलभ्यते। ध्वनेरन्तर्गतं ज्ञेयं ज्ञेयस्यान्तर्गतं मनः। मनस्तत्र लयं याति तद्विष्णोः परमम्पदम्" इत्यादियोगशास्त्रोक्त्या नादाभिव्यक्तिः निर्विकल्पकसमाधिं सम्पाद्य विष्णुपदवाच्यब्रह्मप्राप्तिरूपकैवल्यं सम्पादयतीत्युक्तम्भवति। ततो नादाभिव्यक्तौ अविमुक्तसेवनादिभिरुपायैर्यतितव्यम् योगिभिरिति वेदितव्यम्। नादाभिव्यक्तिर्द्विधा भवति। तत्र अन्तर्नाड्यामपानः प्रविश्य दहराद्याकाशताड़नद्वारा तत्र तत्र नादाभिव्यक्तिं सम्पादयति। तथाचोक्तं योगशास्त्रे "क्षितिम्भित्वोर्ध्वगापानक्षोभिता स्याद्यदोरगी। तदा नादोत्पत्तिरस्य जायते योगिनो हृदि" इति इयमेका नादाभिव्यक्तिः अस्माकं राजयोगिनां परमादरभूमिः इयमेव प्रणववरुणबीजमहाजसदृशध्वनिमातृकाक्षरमहावाक्यादिरूपेण परिणता साधकानां संशयं विच्छिद्य ज्ञानन्निष्पाद्य कृतकृत्यतामावहतीति योगिरहस्यं वेदितव्यम्। अपरा तु नादाभिव्यक्तिः कर्णपिधानपूर्व्वकम् षण्मुखीमुद्रासाधनपूर्व्वकं वा विनापि ताभ्याम् समाहितमनोयोगमात्रपूर्व्वकं वा वाय्वाघातमन्तरेणापि इयं नादाभिव्यक्तिः नैसर्गिकम् सुषुम्नान्तस्थं प्राणघोषपदवाच्यं नादमनुसंदधानस्य अभ्यासशालिनो भवतीति वेदितव्यम्। तथा चोक्तं योगशास्त्रे "मुक्तासने स्थितो योगी मुद्रां सन्धाय शाम्भवीम्। शृणुयाद्दक्षिणे कर्णे नादमन्तस्थमे-

कश्रीः" इति "कर्णौ पिधाय हस्ताभ्याम्" इत्याद्युक्तत्वात् उभयकर्णपिधानसम्मतिरपि व्यज्यत इति वेदितव्यम्। श्रवणपुटनयनगोलकघ्राणमुखानां निरोधनङ्कार्य्यम् "शुद्धसुषुम्नासरणौ स्फुटममलः श्रूयते नादः" इतियोगोक्तिःप्रकृतम्प्रमापयति। इदमेव साधनं षण्मुखीमुद्रापदवाच्यम् भवति। पराङ्मुखीमुद्रापदवाच्यम् ज्योतिष्मतीमुद्रापदवाच्यम् चेति वेदितव्यम्। निरोधनप्रकार उच्यते "अङ्गुष्ठाभ्यामुभौ कर्णौ तर्जनीभ्याञ्च चक्षुषी। नासापुटौ तथान्याभ्याम्प्रच्छाद्य करणानि च" इति योगोक्त्या चकारात् तदन्याभ्याम्मुखम् सिद्धासने स्थित्वा पादपार्ष्णिभ्यां गुदलिङ्गे च प्रच्छाद्येति समुच्चीयते। श्रवणनयनघ्राणमुखगुदलिंगानीति षट्संख्यकानामेतेषाम् मुद्रणादियम्मुद्रा षण्मुखीपदवाच्या भवतीति वेदितव्यम्। अत्र श्रवणनयनघ्राणानां द्वित्वेन लब्धषट्संख्यया सह मुखगुदलिंगानां त्रिसंख्यायाः समायोगात् नवसंख्यालाभात् इयमेव मुद्रा प्रसिद्धनवद्वारसंयमरूपसाधनमुपपन्नमिति वेदितव्यम्। अत्र बाह्येन्द्रियाणां सम्मुखीभूतशब्दादिबाह्यविषयेभ्यो वृत्तिनिरोधात् प्राङ्मुखीभवनात् इयं प्राङ्मुखीपदवाच्या भवतीति वेदितव्यम्। अत्र च अन्तर्दृष्ट्यां ज्योतिःप्रकाशसद्भावात् इयमेव मुद्रा ज्योतिष्मती पदवाच्या भवतीति वेदितव्यम्। अत्र साधकानाम्वृत्तिवैलक्षण्येन दीपकलिकादिरूपेण नानाप्रकारज्योतिराविर्भवतीति वेदितव्यम्। "सर्वचिन्ताम्परित्यज्य सावधानेन चेतसा। नाद एवानुसन्धेयो योगसाम्राज्यमिच्छता" इत्युक्त्वा इयं नादानुसन्धानरूपनादाभिव्यक्तिः गोरक्षनाथादि हठयोगिसम्मता विविधफलप्रसूर्भवतीति वेदितव्यम्। तथा चोक्तं त्रिपुरासारसमुच्चये "विजितो भवतीह तेन वायुःसहजो यस्य समुत्थितः प्रणादः। अणिमादिगुणा भवन्ति तस्यामितपुण्यस्य महागुणोदयस्य। सुरराजतनूजवैरिरन्ध्रे विनिरुध्यस्वकरांगुलिद्वयेन जलधेरिव घोरनादमन्तःप्रसरन्तं सहसा शृणोति मर्त्यः" इति नादश्रवणविषयिण्यः विविधाः प्रक्रियाः योगशास्त्रेषूपदिश्यन्ते। ताश्च ग्रन्थविस्तारभिया नात्र व्यपदिष्टाः ताश्च हठदीपिकादियोगशास्त्रैरवगन्तव्या मुमुक्षुभिः साधकैरिति ॥२।४।३।

## आरम्भे स्वेदकम्पादिः ।२।४।४॥

आरम्भे प्रत्याहारादिसमाध्यन्तयोगसाधनानां पूर्व्वस्थितिभूतप्राणायामरूपाभिक्रमे स्वेदकम्पादिः स्वेदो घर्म्मः। कम्पो वेपथुःशरीरास्थै

र्यमित्यर्थः। आदिशब्देन ब्रह्मरन्ध्ररूपस्थानप्राप्तिर्गृह्यते। अत्र जायते इति योजनीयम्। तथाचोक्तं योगशास्त्रे "कनीयसि भवेत्स्वेदः कम्पो भवति मध्यमे। उत्तमे स्थानमाप्नोति ततो वायुं निबन्धयेत्" इति अत्र-कनीयसीत्यादिविशेषणत्रयम्प्राणायामं विशिनष्टि। ततः स्वेदानुमेयः कनिष्ठः प्राणायामः कम्पानुमेयो मध्यमः ब्रह्मरन्ध्ररूपस्थानप्राप्त्यनुमेय उत्तम इत्युक्तम्भवतीति वेदितव्यम् ॥२।४।४॥

## प्रतिचक्रं नादवैचित्र्यम्। २।४।५ ॥

प्रतिचक्रं एकैकञ्चक्रञ्चक्रम्प्रति नादवैचित्र्यं शब्दवैलक्षण्यम्। अत्र भवतीति योजनीयम्। मूलाधारादिब्रह्मरन्ध्रान्तसर्व्वेषु षट्सु चक्रेषु पद्मपदवाच्येषु पार्थक्येन घण्टानादादिभेदेन नाना नादा आविर्भवन्तीत्यर्थो वेदितव्यः। तथाचोक्तं योगशास्त्रे "मृदङ्गनादोत्पत्तिस्तु मणिपूरभिदा भवेत्। अनाहतविभेदेन घण्टाध्वनिरुदेति च। विशुद्धचक्रभेदेन यन्त्रनादःप्रजायते" इत्यादि। उक्तञ्च स्वात्मारामेण "ब्रह्मग्रन्थिरूपशून्यपदवाच्यहृदाकाशविष्णुग्रन्थिरूपातिशून्यपदवाच्यविशुद्धाकाशरुद्रग्रन्थिरूपमहाशून्यपदवाच्यभूमध्याकाशब्रह्मरन्ध्राकाशेषु क्रमेण आरम्भघटपरिचयनिष्पत्त्यवस्थाभूमिषु क्वणत्कभेरीमर्द्दलवीणानादानुकारिनादाभिव्यक्तिः। उक्तञ्च त्रिपुरासारसमुच्चये "आदौ मत्तालिमाला जनितरवसमस्तारसंस्कारकारी नादोऽसौ वांशिकस्यानिलभरितलसद्वंशनिस्वानतुर्य्यः। घण्टानादानुकारी तदनु च जलधिध्वानधीरो गभीरो गर्ज्जन् पर्य्यन्यघोषः पर इह कुहरे वर्त्तते ब्रह्मनाड्याः" इति। स्वात्मारामस्त्वाह—"आदौ जलधिजीमूतभेरीझर्झरसम्भवाः। मध्ये मर्द्दलशङ्खोत्था घण्टाकाहालजास्तथा। अन्ते तु किङ्किणीवंशवीणाभ्रमरनिस्वनाः" इति। एवमन्यत्र हंसोपनिषदि शिवपुराणादौ च प्रकारान्तरेण नादक्रमोऽभिधीयते। तथासति तेषामन्योन्यविरोधात् महदासमञ्जस्यमापतति। तत्परिहाराय निगद्यते। क्वचित् वाय्वाघातसञ्जातचक्रभेदमन्तरापि अभ्यासशालिना अनुसन्धीयमान आभ्यन्तरिकः साधकेतरानुपलभ्यमानः भिन्नक्रमो नादः श्रूयते। क्वचित् वाय्वाघातसञ्जातसमुत्पन्न आभ्यन्तरिकोऽपि संशुद्धनाड़िकस्य योगिनः निरुक्तक्रमभिन्नक्रमो नादः श्रूयते। क्वचित् क्षेत्रविन्यासाधनाभ्यासवैचित्र्यसचिवः साधकानामपरक्रमो नादः श्रूयते। इतियोगिसम्प्रदायरहस्यम् वेदितव्यम्। नचात्र विवदितव्यं साधकैर्मुमुक्षुभिः ॥२।४।५॥



## निष्पत्तौ यन्त्रवन्नादः ।२।४।६।

निष्पत्तौ योगशास्त्रप्रसिद्धनिष्पत्यवस्थायाम् नादाभिव्यक्तिपराकाष्ठायामितियावत् । यन्त्रवन्नादः वीणाख्ययन्त्रसदृशशब्दः अत्र जायते इति योजनीयम् । तथाचोक्तं योगशास्त्रे "निष्पत्तौ वैणवः शब्दः नदद्वीणाक्वणो भवेत्" इति । यद्यपि "क्रमान्मेघनिनादाभो जायते तेन बुध्यते" इतियोगशास्त्रोक्तेः "दशमो मेघनादः" इतिहंसोपनिषदुक्तेश्च । निष्पत्तौ मेघध्वनिरुपपद्यते । तथापि पूर्व्वोक्तनादवैचित्र्यविरोधप्रतिवचनवत् अत्रापि प्रतिवक्तव्यमिति वेदितव्यम्। निष्पत्तावपि यन्त्रनादाभिव्यक्त्यव्यवहितपूर्व्व काले वैणवपदवाच्यो वेणुसदृशनादो जायते इति "निष्पत्तौ वैणवः शब्दः" इत्युक्तया यन्त्रनादोक्तिर्न विरुध्यते इतिवेदितव्यम् ।२।४।६।

## गात्रविक्षेपश्च ।२।४।७।

गात्राणां करचरणादीनां विक्षेपः चलनम् । चकारः पुनरर्थकः । अत्रभवतीति योजनीयम् । अभ्यासशालिनः गात्रेषु वायुसञ्चरणात् गात्रसञ्चारो जायते इत्यर्थो वेदितव्यः। यद्यपि मध्यमप्राणायामेऽपि कम्पोऽभिधीयते तथापि लिङ्गपुराणे प्रस्वेदकम्पनोत्थानजनकश्चेत्येकत्र व्यपदिश्य क्रमेणान्यत्र ध्वनिसम्वित्तिरङ्गमोटनकम्पनम् इतिव्यपदेशात् नायङ्गात्रविक्षेपो मध्यमप्राणायामसहभूः किन्तु कुम्भकनिष्पत्त्यनन्तरकालीनइति वेदितव्यम् । अपिच प्रथमं ध्वनिसंवित्तिरित्युक्तिर्दृश्यते । तदनन्तरम् अङ्गमोटनकम्पनम् इतिच ततश्च नादाभिव्यक्तयनन्तरमेव सूत्रकारस्वरसानुसारी निष्पत्त्यवस्थितिसमकालीनोऽयङ्गात्रविक्षेप उत्युपपद्यत इति वेदितव्यम् ।२।४।७।

## मुद्रान्यासात्मकानेकविधः ।।२।४।८।।

गात्रविक्षेपः किमात्मको जायते इत्याकाङ्क्षायाम् श्रीमान् सूत्रकारः तं विशिनष्टि। मुद्रान्यासात्मकानेकविधः मुद्रा योगशास्त्रप्रसिद्धा क्लेशान् मुद्रणातीतिव्युत्पत्तिमती महामुद्रा महाबन्धमहावेधखेचर्य्युड्डीयानमूलबन्धजालन्धरविपरीतिकरी वज्रोलीशक्तिचालनप्रभृतयः तन्त्रशास्त्रप्रसिद्धा योनिधेन्वङ्कुशाद्याः न्यासः हृदयाद्यङ्गेषु कराङ्गुल्यादिस्थापनरूपः षडङ्गमातृकाव्यापकषोढ़ादिपदवाच्यः तौ मुद्रान्यासौ

तदात्मकः तत्स्वरूपकः स चानेकविधः अनेके बहवो विधाः प्रकाराः यस्य स तथाभूतः "अङ्गमोटनकम्पनम्" इति लिङ्गपुराणोक्तेः अस्य गात्रविक्षेपरूपकम्पनस्य अङ्गमोटनत्वोपपत्तौ मुद्रान्यासात्मकत्वम् व्यक्तमिति वेदितव्यम् । यद्यपि प्रायशः शास्त्रेषु नायम्मुद्रान्यासात्मको गात्रविक्षेपो व्यपदिश्यते तथापि योगाभिज्ञैरनुभूतोयम् परमरहस्योविक्षेपः श्रीमता सूत्रकारेण योगिवर्य्येण स्वयमप्यनुभूतोऽत्र शिष्यप्रबोधायोपदिष्ट इति वेदितव्यम् ।२।४।८।

## ज्वलनञ्चक्रमध्यगं द्वीपाकाराऽचिरस्थायि ॥२।४।९॥

ज्वलनं ज्वालानुभवनम् । चक्रमध्यगम् अनाहतचक्राद्यन्तस्थम् । द्वीपाकारम् द्वीपस्य आकारो यस्य तच्च अचिरस्थायि अल्पकालस्थितिशीलं द्वीपाकाराचिरस्थायीति समस्तम्पदं वेदितव्यम् । अत्र भवतीति योजनीयम् । तथाचोक्तमुत्तरगीतायाम् "जीवे परेण तादात्म्यं सर्व्वगं ज्योतिरीश्वरः। प्रमाणलक्षणैर्ज्ञेयं स्वयमेकाग्रवेदिना" इति। उक्तञ्चस्वात्मारामेण "अपाने ऊर्ध्वगे जाते प्रयाते वह्निमण्डलम्। तदाऽनलशिखादीर्घा जायते वायुनाऽऽहता" इति। उक्तञ्च योगियाज्ञवल्क्येन "देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम्। त्रिकोणन्तु मनुष्याणां चतुरस्रञ्चतुष्पदाम्। मण्डलन्तु पतङ्गानां सत्यमेतद्ब्रवीमि ते। तन्मध्ये तु शिखा तन्वी सदा तिष्ठति पावके" इति। यद्यपि निरुक्तपावकशिखा मनुष्यपशुपक्ष्यादिप्राणिसाधारण्येन वह्निमण्डलवर्तिनी वर्त्तते इतिनिरुक्तयोगियाज्ञवल्क्योक्त्या सिध्यति तथापि परमेश्वरचमत्कृत्या न सा तेषान्तापमनुभावयति। योगिनान्तु सा शिखा वायुहता प्रज्वलन्ती सती तापकारिणी जायते। स च तापः अमरवारुण्यादिरसशैत्येन शीतली शीतकार्य्यादिकुम्भकोद्भूतवायुहतिवेगप्रशान्तौ प्रशाम्यति। अत एव तत्तापस्य श्रीमत्सूत्रकारसूत्रितज्वलनपदवाच्यस्य दीर्घकालनैरन्तर्य्यसचिवसद्भावासत्त्वात् अचिरस्थायित्वं प्रतिज्ञातं श्रीमता सूत्रकारेणेति रहस्यं योगाभिज्ञवेद्यं वेदितव्यम्। तत्र अमरवारुणी रसजातशीतली शीतकार्य्यादिकुम्भकोद्भूतशैत्याभ्यां कतिपयदिनस्थायिबाह्याभ्यन्तरिकसकलदेहव्यापितापानुभवशान्तिजातवायुहतिवेगशान्त्या कतिपयक्षणमात्रस्थायिद्वीपाकृतिचक्रमध्यगशिखा प्रशाम्यतीति योगीन्द्रानुभूतिवेद्यं वेदितव्यम् "हृदयाग्निर्ज्वलज्ज्वालोददाह मलिनं वपुः" इत्यादियोगशास्त्रशिष्टोक्तिरपि प्रकृतम्पोषयतीति वेदितव्यम् ।२।४।९।



## आत्ममन्त्राक्षरयोरन्योन्यस्थितिविनिमयश्च ॥२।४।१०॥

हंस इति आत्ममन्त्रस्याक्षरयोः बिन्दुविसर्गावसानकयोः हकारसकारयोः अन्योन्यस्थितिविनिमयः सोऽहमित्याकारेण परस्परसमन्वयः। चकारः पुनरर्थकः। उक्तञ्च शारदायाम् "पुम्प्रकृत्यात्मकौ प्रोक्तौ बिन्दुसर्गौ मनीषिभिः। ताभ्यां क्रमात्समुद्भूतौ बिन्दुसर्गावसानकौ। हंसौ तौ पुम्प्रकृत्याख्यौ हम्पुमान् प्रकृतिस्तु सः। अजपा कथिता ताभ्यां जीवो यामुपतिष्ठते। पुरुषं स्वाश्रयं मत्वा प्रकृतिर्नित्यमात्मनः। यदा तद्भावमाप्नोति तदा सोऽहमियम्भवेत्" इति। एतावता उक्तम्भवति प्राणायामावसरे हंस इत्यजपाजपशालिनोऽभ्यासिनः निरुक्ताजपापदवाच्यहंस इत्यात्ममन्त्रः अभ्यासक्रमेण स्वयमेव सोऽहमित्याकारेण परिवर्त्तत इति अभ्यासी प्राणायामसहचरप्राणापानौ हंस इत्यात्ममंत्रजपात् परिवृत्तस्थितिकौ सम्पादयन् अभ्यासतः स्वयमेव उपस्थितं सोऽहमित्याकारेण परिणतं निरुक्तमन्त्रं समासाद्य तज्जपानुकूलमेव प्राणायाममभ्यसतीत्यर्थो वेदितव्यः ॥२।४।१०।

## मातृकानादस्याभिव्यक्तिः ।२।४।११।

मातृकानादस्य सानुस्वाराकारादिक्षकारान्तमूलाधारदिषट्चक्रान्तर्वर्त्तिपञ्चाशद्वर्णध्वनेः अभिव्यक्तिः प्राकट्यम्। अत्र जायते इति योजनीयम्। यद्यपि शब्दस्य पूर्व्वावस्थाविशेषः परापश्यन्तीमध्यमापदवाच्यः सूक्ष्मरूपः न सर्व्वजनताश्रुतिगोचरो भवति। उत्तरावस्थाविशेषः वैखरीपदवाच्य एव स्वरव्यञ्जनात्मा स्थूलरूपः सर्व्वैराकर्ण्यते अतीन्द्रियवस्तुदृशाम् आभ्यन्तरिकशब्दस्पर्शरूपरसगन्धविषयविदां योगैश्वर्यवतांम् योगिनान्तु निरुक्तपूर्व्वावस्थाविशेषोऽपि सूक्ष्मरूपः समाहितस्थितौ श्रुतिगोचरो भवतीति वेदितव्यम्। सूत्रितञ्च तथा सूत्रद्वयेन श्रीमता योगाचार्य्येण पतञ्जलिना "प्रवृत्त्या लोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् "ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते" इति "अक्षराणि समस्ताणि सर्व्वे बिन्दुसमाश्रिताः" इत्युक्तेः मातृकाक्षराणां बिन्दुसमाश्रयोपपत्तौ सानुस्वारत्वमुपपन्नमिति वेदितव्यम्। ननु "सोऽन्तरात्मा तदा देवो नादात्माजायते स्वयम्। यथा संस्थानभेदेन स भूयो वर्णतां गतः" इत्युक्तेः अभिव्यक्तनादानाम् योगिनां आभ्यन्तरिकनाद एव मातृकाक्षररूपेण परिणतो भवतीत्युपपद्यते। "बिन्दुर्नादेन

भिद्येत" इत्युक्तेस्तु विन्दुः नादकार्य्यम् अक्षरकारणञ्च भिद्यते स्वरव्यञ्जनादिनानारूपेणाविर्भवतीति उपपन्नम्भवति। एवमुभयवाक्यविरोधापत्तिरापतति तन्निराशाय निगद्यते वर्णकार्य्यम्प्रति नादस्य वर्णकारणबिन्दुजनकत्वेन परम्पराकारणत्वम् बिन्दोस्तु नादकार्य्यस्य तम्प्रति साक्षात्कारणत्वमित्यविरोधो वेदितव्यः। भवति च ज्योतिर्विदामभ्युपगमः बिन्दवः समुदायभावेन सम्भूय रेखाकृतिमधिगच्छन्ति। रेखैव च विन्यासविशेषवती अक्षररूपिणी लोकेदृश्यते। ततोपि बिन्दोरक्षरम्प्रति कारणत्वमुपपद्यते। एतावता उक्तम्भवति अभ्यासशालिनः अभ्यासकाले सोऽहमित्याकारसम्पत्त्यनन्तरम् तत्रत्यनादबिन्दुसम्भवानि मातृकाक्षराणि स्वयमुपस्थितानि अभ्यासिभिःउपलभ्यन्ते। यदा कुण्डलनीशक्तिः उत्थाय ऊर्ध्वाभिमुखम्प्रस्थीयते तदा मातृकाक्षराणि आगममन्त्ररूपाणि सम्पद्य स्वयमुपस्थीयन्ते इतिरहस्यंवेदितव्यम्। उक्तञ्चागमे "नादाख्यम्पदमर्धचन्द्रकुटिलं संविन्मयीं शाश्वतीम्। यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद्विभुं तेजसाम्"इति। अत्र अक्षररूपिणीमितिशब्देन कुण्डलिन्याः अक्षरं रूपयतीतिव्युत्पत्त्या मातृकाक्षराभिव्यञ्जकत्वं सिद्धमिति वेदितव्यम् ॥२।४।११।

## तद्वत्प्रणवस्याऽपि ।२।४।१२।

तद्वत् मातृकानादस्याभिव्यक्तिवत्। प्रणवस्य ओंकारस्य। अपिशब्दः अव्ययात्मा समुच्चयार्थः। अत्र अभिव्यक्तिर्जायत इति योजनीयम्। तथाचागमे "सकारार्णम हकारार्णम लोपयित्वा प्रयत्नतः। सन्धिङ्कुर्य्यात् पूर्व्वरूपं तदासौ प्रणवो भवेत्" इति। इदं वाक्यम्पूर्व्वं व्याख्यातम्। अभ्यासिनः अभ्यासकाले सोऽहमितिसम्पत्त्यनन्तरम् मातृकानादाभिव्यक्तिसमकालीनः निरुक्तवाक्यानुसारी ओंकारध्वनिराविर्भवतीत्यर्थो वेदितव्यः। तत्रैव "नादाख्यम्पदमर्धचन्द्रकुटिलं संविन्मयीं शाश्वतीम्। यान्तीमक्षररूपिणीं विमलधीर्ध्यायेद्विभुं तेजसाम्" इति आगमोक्तेः नादाख्ये अर्धचन्द्रकुटिले पदे प्रणवस्वरूपे मातृकानादवलिता कुण्डलनी शक्तिर्लीयते। अतःपरम्प्रणवनादाविर्भावसम्पत्तौ सत्याम् निष्पत्त्यवस्थाविर्भावो वेदितव्यः। "पूर्व्वरूपन्तदासौ प्रणवो भवेत्" इत्युक्तेः प्रणवस्य स्वरूपभूतात्मवस्तुसाक्षात्कारस्य पूर्व्वरूपत्वम् प्रागुदिगारुणस्य सूर्य्यसाक्षात्कारस्येव वेदितव्यम्। यथा तदानीमपि सूर्य्योदयात् प्राक् प्रभातसमये लोको दिनमिति व्युत्पन्नमतिर्भवति। न च रात्रिरिति। तथाऽत्रापि प्रणवाविर्भावे सति स्वरूपसाक्षात्कारा-

त्प्रागपि योगनिष्पत्त्यवस्थैव योगाभिज्ञैरभ्युपगम्यत इत्यर्थो वेदितव्यः। निरुक्तपूर्व्वरूपत्वं पक्षान्तरेण सोऽहमितिमन्त्रावयवरूपपूर्व्वोत्तरवर्णीभूतसकारहकारलोपानन्तरं सकारान्ताविति स्वरस्य हकारान्तामित्यस्य च सन्ध्यापूर्व्ववर्णाविति स्वरस्य उत्तररूपभूतसानुस्वारामितिस्वरस्य च मेलनसम्पन्नवर्णात्मकप्रणवस्येति वेदितव्यम्। बाह्यप्रदेशावलम्बिनी त्वगिन्द्रियव्यापिनी चक्षुर्विषयीभूता अनिर्वचनीयकामिनी प्रतिमा मूलाधारादाविर्भूय हृदयप्रदेशं समासाद्याश्लिष्य च तत्र लीना भवति। तदानीन्तनः सुस्वरगानरूपः प्रणवनाद आविर्भवतीति योगरहस्यं योगिजनानुभवगोचरं वेदितव्यम्। तथोक्तञ्चागमे "अथातः सम्प्रवक्ष्यामि निर्णयम्प्रणवस्य तु। कलापञ्चकसंयुक्तन्तत्क्रमं शृणु पार्व्वति!। अकारस्य उकारस्य मकारस्य तृतीयकः। नादश्चतुर्थो गदितः पञ्चमो बिन्दुरीरितः। ब्रह्मा विष्णश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः प्रणवश्च समन्वितः। शृणु यत्नेन देवेशि!। कलासप्तकरूपिणम्। कलासप्तस्वरूपश्च सप्तधा भेद ईरितः। अकारश्च उकारश्च मकारश्च तृतीयकः। नादो बिन्दुस्ततो देवि नादातीतं ततो भवेत्। बिन्द्वतीता सप्तमी स्याच्छाम्भवी परिकीर्त्तिता। आच्छादयन्त्यः कामेशं तत्रस्थाः सुन्दरीकलाः। प्रणवः सुन्दरीरूपा कलासप्तकसंयुता" "विधाय धारावदने सुधायाः श्रीचक्रमभ्यर्च्य कुलक्रमेण। आस्वादयन्त्यः पिशितं मृगाक्षीमालिङ्ग्य मोक्षं सुधियो लभन्ते। पीत्वाऽऽलिङ्ग्य कुलाचारे प्रमदां यौवनोन्नताम्। कोटिजन्मार्ज्जितम्पापं तत्क्षणादेव नश्यति" इति। अत्र मृगाक्षीशब्देन निरुक्तप्रणवरूपिण्याः सुन्दर्या ग्रहणं वेदितव्यम्। पिशितशब्देन पारिभाषिकगोमांसस्य तथा सुधाशब्देन पारिभाषिक्या अमरवारुण्याश्च ग्रहणं वेदितव्यम्। तथा चोक्तं स्वात्मारामेण "गोमांसं भक्षयेन्नित्यम्पिबेदमरवारुणीम्। कुलीनन्तमहम्मन्ये इतरे कुलघातकाः। गोशब्देनोदिता जिह्वा तत्प्रवेशो हि तालुनि। गोमांसभक्षणन्तत्तु महापातकनाशनम्। जिह्वाप्रवेशसम्भूतवह्निनोत्पादितः खलु। चन्द्रात्स्रवति यः सारः स स्यादमरवारुणी" इति। उक्तञ्च प्रणवस्वरूपं शिवगीतायाम् "अकारश्च उकारश्च मकारो बिन्दुलक्षणः। त्रिधा मात्रास्थितिर्यत्र तत्परं ज्योतिरोमिति। अकार उच्यते रुद्रो मकारश्च पितामहः। उकार उच्यते विष्णुः तत्परंज्योतिरोमिति। इच्छा क्रिया ज्ञानशक्तिर्ब्राह्मी गौरी च वैष्णवी। त्रिधा शक्तिस्थितिर्यत्र तत्परंज्योतिरोमिति। ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा। अमला-

कस्थिराकारं प्रज्वलद्भुवनत्रयम्। धारयत् ब्रह्मविष्णवादिवह्निना सह दृश्यते""दृशिस्वरूपं गगनोपमम्परं सर्व्वात्मकं सात्त्विकमेकमक्षरम्। अलेपनं सर्व्वगतं यदद्वयं तदेव चैकं प्रणवम्मदुक्तम्" इति।

यद्यपि "ओमित्येवं ध्यायथ आत्मानम्" इत्यादिश्रवणात् "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात् साक्षात् पश्यति मां ततः" इत्यादिस्मरणात् "तज्जपस्तदर्थभावनम्" इतिपात ञ्जलदर्शनाच्च आत्मरूपत्वेन प्रणवस्य चिन्तनम् तथा जपश्च साधन रूपेण विधीयते। यत्र स्वयमेव प्रणवाविर्भावः मध्यनाड़ीगतवायुताड़ननिष्पन्नः अभ्याससम्पादितः स सिद्धिरूपेण वेदितव्यः। तदानीन्तनस्य निरुक्तनादस्य वागिन्द्रियागोचरत्वं तदभिव्यक्त्यनुकूलकृत्यजन्यत्वञ्च प्रकृतम्पोषयत इति वेदितव्यम्। अत्र आत्मनः एकाक्षरशब्दब्रह्मरूपत्वम् समाहितस्थितौ परिचीयते "ऊमित्येवं ध्यायथ आत्मानम्" इत्यादिश्रुतेः प्रणवस्य ध्यानविषयीभूतत्वोपपत्तेः ध्यायथ इति मध्यमपुरुषक्रियासूचितध्यातृत्वोपपत्तेः अत्र ध्यातृध्यानसत्त्वात् ध्येयसद्भावोपपत्तेश्च ध्यातृध्यानध्येयरूपत्रिपुटीलाभात् सम्प्रज्ञातसमाधिः तल्लक्षण लक्षितः श्रीमता सूत्रकारेण सूचित इत्यर्थो वेदितव्यः।२।४।१२

## ततो महाजसदृशध्वनिः।२।४।१३।

ततः प्रणवाभिव्यक्त्यनन्तरम्। महाजसदृशध्वनिः महावस्तध्वनितुल्यध्वनिः अत्र जायते इति योजनीयम्। महाजशब्दोत्तरध्वनिशब्दोऽत्र लुप्तो वेदितव्यः ततश्च मध्यमपदलोपो समासश्च वेदितव्यः। महाजध्वनिसदृशध्वनिः इतिशब्दस्वरूपो वेदितव्यः। तदभिव्यक्तावयं योगरहस्य क्रमः। वमितिशब्दस्वरूपवरुणबीजनिष्पत्तिभूताकारशब्दः उकारशब्दस्वरूपबिन्दुमभिव्यक्तीकृत्य विलीयते। सत्येवम् वुमितिशब्दस्वरूपं निष्पन्नम्भवतीति वेदितव्यम्। निरुक्तोकारशब्दस्य बिन्दुत्वम् अकारोत्तरीभूतत्वञ्च "अकारो नादरूपश्च ह्युकारो बिन्दुरूपकः। मकारस्तु कला प्रोक्ता ओंकारो ज्योतिरेवहि" इति कपिलगीतोक्तिरुपपादयतीति-वेदितव्यम्।२।४।१३।

## वरुणबीजस्य च।२।४।१४।

वरुणबीजस्य वमितिशब्दस्वरूपस्य चेतिपुनरर्थकमव्ययम्। अत्राभिव्यक्तिर्जायत इति योजनीयम्। प्रणवो निजनिष्पत्तिकारणीभूतयोरकारोकारयोः स्थितिविनिमयेन संहत्या वरुणबीजरूपेण परिणतो

भवतीति योगिजनानुभवगोचरं योगरहस्यं वेदितव्यम् । निष्पत्त्यवस्थायां प्रणवमहाजध्वनिसदृशध्वनिवरुणबीजानाम् तन्त्रीनादतालनादस्वरूपेणाभिव्यक्तिर्जायते इति योगाभिज्ञसम्मतिस्तदनुभूतिश्च वेदितव्या ॥ २ । ४ । १४ ॥

## ततः शुशुकारफुत्कारयोः ।२।४।१५।

ततः वरुणबीजाभिव्यक्त्यनन्तरम् । शुशुकारफुत्कारयोः सर्प्परूपिण्याः वायुताड़िताया: स्वविलरूपान्मूलाधारात् प्रस्थानभूमिगतब्रह्मनाड्यन्तर्गतायाः कुण्डलनीशक्त्याः समुदीरितयोः ध्वनिविशेषयोः अत्राभिव्यक्तिर्जायत इति योजनीयम् । तालुमूलावलम्बिसुधामयचन्द्रमसः यदमृतं निर्गलति तत्काकचञ्चुपुटेन पिवन्निव जिह्वया चुम्बितिध्वनिपुरस्सरम्पीयते । तच्च शुशुकारफुत्कारध्वन्याकृष्टशीतलवाय्वानीतम्भवतीति वेदितव्यम् । तथाचोक्तं शिवसंहितायाम् "सरसं यः पिवेद्वायुं प्रत्यहं विधिना सुधीः । नश्यन्ति योगिनस्तस्य श्रमदाहजरामयाः। काकचञ्च्वा पिवेद्वायुं सन्ध्ययोरुभयोरपि । कुण्डलन्या मुखं ध्यात्वा क्षयरोगस्य शान्तये "चुम्बन्ती यदि लम्बिकाग्रमनिशं जिह्वारसस्पन्दिनी सक्षारा कटुकाम्लदुग्धसदृशी मध्वाज्यतुल्या तथा । व्याधीनां हरणं जरान्तकरणं सस्त्रागमोदीरणम् तस्य स्यादमरत्वमष्टगुणितम् सिद्धाङ्गनाकर्षणम् मूर्ध्नः षोड़शपत्रपद्मगलितम्प्राणादवाप्तं हठादूर्ध्वास्योरसनां नियम्य विवरे शक्तिम्परां चिन्तयन् उत्कल्लोलकलाजलञ्च विमलं धारामयं यः पिवेन्निर्व्याधिः स मृड़ालकोमलवपुर्योगी चिरञ्जीवति इति । २ । ४ । १५ ।

## महावाक्यादेः स्फुरणम् । २ । ४ १६ ॥

महावाक्यादेः ऋग्वेदगत प्रज्ञानम्ब्रह्मेति, यजुर्वेदगताहम्ब्रह्मास्मीति, सामवेदगततत्त्वमसीति, अथर्व्वणवेदगतायमात्मा ब्रह्मेति, श्रुतिसम्मताद्वैतप्रतिपादिकाया महावाक्यपदवाच्यायाः सर्व्वं खल्विदम्ब्रह्मेति, एष सर्व्वेश्वर इति, सर्व्वं विष्णुमयञ्जगदित्याद्यनेकश्रौतस्मार्त्तवाक्योपेताया उक्तेःस्फुरणं स्फूर्त्तिः ।अत्र भवतीति योजनीयम् । योगिनां लब्धभूमिकानां हृद्ग्रन्थिविभेदिका सर्व्वसंशयविच्छेदिका स्वरूपपरिचायिका परमानन्ददायिका अविद्यावृतिनिवृत्त्यनुकूलिनी सकलानर्थप्रतिकूलिनी नीरुक्तोक्तिसमाविर्भूतिर्भवतीति वेदितव्यम् । तथाचोक्तं श्रीम

ताचक्रपाणिना उत्तरगीतायाम् "जीवे परेण तादात्म्यं सर्व्वगञ्ज्योतिरीश्वरः। प्रमाणलक्षणैर्ज्ञेयं स्वयमेकाग्रवेदिना" जीवे जीवात्मनि परेण परमात्मना सह तादात्म्यम् अभिन्नत्वम् अद्वैतापरोक्षज्ञाननिष्पत्तिरिति यावत्। स्वयं योगमहिम्ना शास्त्रश्रवणमन्तरापि एकाग्रवेदिना चित्तैकाग्र्यप्रत्ययीकृतानतानिष्पत्त्यवस्थितिकयोगिना प्रमाणलक्षणैः स्वतःस्फुरितमहावाक्यादिभिः ज्ञेयं वेद्यम्भवति। निरुक्ततादात्म्यं विशिनष्टि सर्व्वगं जीवात्मपरमात्मनोरुपाधिभूताविद्यामायानिरासेन निरुपाधिकमनवच्छिन्नं ज्योतिः प्रकाशात्मकम् ईश्वरः तदेव तादात्म्यम् ईश्वरात्मकत्वेन ईश्वरपदवाच्यं भवतीति श्लोकार्थो वेदितव्यः। एतावता योगिनां शास्त्रमन्तरापि स्वयमेव ज्ञाननिमित्तीभूतशास्त्रोपलब्धिर्भवतीत्युक्तम्भवति। समुदितोपार्ज्जितपुण्यपुञ्जस्य कस्यचिद्योगिनः महावाक्यादिस्फूर्त्तिः स्वाभिव्यक्तिसमकालमेव ज्ञानं निष्पादयति। कस्यचित्तु कषायप्रतिबद्धस्य कषायपाकानन्तरम् कालान्तरेण विद्यमानजन्मनि जन्मान्तरे वेति वेदितव्यम्। तथाच स्मर्य्यते "विचारयन्नामरणन्नैवात्मानं लभेत चेत्। जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति इति ॥२।४।१६।

## वेदे प्रामाण्यग्रहः । २ । ४ । १७ ॥

वेदे श्रुतौ।प्रामाण्यग्रहः प्रमाणत्वनिश्चयः।अत्र भवतीति योजनीयम्। योगिनां व्युत्थानदशायां वेदाः प्रमाणम् इत्यादिवाक्यस्फूर्त्या निरुक्तमहावाक्यादिस्फूर्त्या च कुतर्कहेतुकासम्भावना-संशयादिप्रतिपक्षभावनाव्युदासपुरस्सरं वेदे तन्मूलके शास्त्रे च श्रद्धोत्पद्यते। महावाक्यादिस्फूर्त्ताविव अत्रापि प्रमाणलक्षणसामान्यात् प्रमाणलक्षणैर्ज्ञेयमित्याद्युक्तिः प्रमाणत्वेन योजनीया। तत्र कस्यचित्तु कषायरहितस्य योगिनः निरुक्तवाक्यस्फुरणसमकालीना तदाकारकवेदादिश्रद्धार्जनिका ज्ञानोत्पत्तिरुपजायते। कस्यचित्तु कषायप्रतिबद्धस्य वाक्यस्फुरणमात्रं भवति। कषायरूपप्रतिबन्धक्षये कालान्तरेण निरुक्तज्ञानसम्पत्तिर्भवतीति लब्धभूमिकयोगाभिज्ञानुभूतिर्वेदितव्या।२।४।१७

## कृतकृत्यताग्रहश्चात्मनि । २ । ४ । १८ ॥

कृतकृत्यताग्रहः कृतार्थत्वनिश्चयः। आत्मनि स्वस्मिन्। अत्र समुपतिष्ठतीति योजनीयम्। लब्धभूमिकस्य योगिनः महावाक्यादिस्फुरण-

जनितज्ञानोदये सति कृतकृत्योऽहं न चास्ति किञ्चित्कर्त्तव्यम् इत्याकारिका तृप्तिस्ततः शोकनिवृत्तिश्च भवतीति योगाभिज्ञानुभूतिर्ज्ञातव्या। तथाच "किमिच्छन् कस्य वा हेतोः शरीरमनुसंज्वरेत्" इति श्रूयते "कृतं कृत्यं प्रापणीयम्प्राप्तमित्येव तुष्यति' इति स्मर्य्यते। उच्यते चोत्तरगीतायाम् "ज्ञानमृतेन तृप्तस्य कृतकृत्यस्य योगिनः। न चास्ति किञ्चित्कर्त्तव्यमस्तिचेन्न स तत्त्ववित्" भगवद्गीतायाञ्च "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टः तस्यकार्य्यं न विद्यते" अष्टावक्रगीतायाञ्च "कृत्यं किमपि नैव स्यादितिसञ्चिन्त्य तत्त्वतः। यदा यत्कर्त्तुमायाति तत्कृत्वास्ते यथासुखम्" उक्तञ्च "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति "दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषः दर्शनाभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्योऽव्यक्ताव्यक्तधर्म्मकेभ्यो विरक्त इति तद्द्वयम्वैराग्यम् तत्र यदुत्तरम् तज्ज्ञानप्रसादमात्रम् यस्योदये प्रत्युदितख्यातिरेवं मन्यते प्राप्तम्प्रापणीयम् 'क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्व्वा भवसंक्रमो यस्याविच्छेदात् जनित्वा म्रियते मृत्वा च जायत" इति पातञ्जलसूत्रभाष्यं॥

योगारूढस्य योगिनः सत्वपुरुषान्यताख्यातिसम्पत्तौ कर्म्मन्यासरूपः सन्न्यासः आग्रहेण चेतसि समाविशति नैवाहं कर्म्माचरिष्यामि अकर्त्तैवाहम्भवामि इत्यवधारितचेतसोयोगिनः नित्यनैमित्तिकेष्वपि आवश्यकेषु कर्म्मसु अप्रवृत्तिर्भवति। तदन्तरम् निरुक्तख्यातिनिरोधावसरे पुरुषख्यातिमात्रनिष्पत्तौ सत्यां कर्म्माकरणरूपाग्रहस्यापि साङ्कल्पिकत्वात् कर्त्तव्यतान्तःपातित्वेन निरोधो भवति। तत्र उभयोरपि कर्म्माकरणकरणयोरनाग्रहेणैव प्रवृत्तिर्भवतीति वेदितव्यम्। तथाचोक्तम्भगवद्गीतायाम् "नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन। न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः" इति। न तदानीम् कायिक वाचनिकसमीहामात्रकर्म्म निवर्त्तते। किन्तु मानसिकसमीहारूपज्ञानमपि निवर्त्तते। तथाचोक्तम उत्तरगीतायाम् "उल्काहस्तो यथा कश्चित् द्रव्यमालोक्य तां त्यजेत्। ज्ञानेन ज्ञेयमालोक्य ज्ञानम्पश्चात्परित्यजेत्" इति॥ २।४।१८॥

## पावित्र्यग्रहश्च। २। ४। १९।

पावित्र्यग्रहः पवित्रतानिश्चयः। चेतिपुनर्थकमव्ययम्। अत्र भवतीति योजनीयम्। योगारूढस्य योगिनः पवित्रोऽहमित्याकारकः प्रत्ययो जायते

इतिसाधकानुभूतिर्वेदितव्या। तथाचोक्तम्भगवद्गीतायाम् "नहि ज्ञानेन सदृशम्पवित्रमिह विद्यते। तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" इति। वस्तुतः आत्मा तु स्वरूपतः पवित्र एव भवति।परन्तु रजस्तमोनुविद्ध मलिनचेतःसम्पृक्तः अध्यस्तचित्तमालिन्यः अपवित्र इव भवति।ततश्चित्तपावित्र्यनिबन्धनमेवात्मपावित्र्यम्भवतीतिवेदितव्यम्। चित्तपावित्र्यन्तु तद्वृत्तिक्षयसम्पाद्यम्भवति तथाचस्मर्य्यते "यथा निरिन्धनोवह्निः स्वयोनावुपशाम्यति। तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति" इति यथानिरिन्धनो दग्धकाष्ठोवह्निः स्वयोनौ स्वकारणे तेजोमात्रे उपशाम्यति ज्वालादिरूपं विशेषाकारम्परित्यज्य तेजोमात्ररूपे यथाऽवतिष्ठते। तथा तेनैव प्रकारेण चित्तमन्तःकारणमपि वृत्तिक्षयान्निरोधसमाध्यभ्यासेन राजसादिसकलवृत्तिनिरोधात् जीवन्मुक्तिदशायाम् मनसः सरूपलयात् कैवल्ये सति तस्य विरूपलयादित्यर्थः। स्वकारणे सत्त्वमात्रे उपशाम्यति सत्त्वमात्रावशेषम्भवतीतिश्लोकार्थो वेदितव्यः। अपिच स्मर्य्यते "चित्तमेव हि संसारः तत्प्रयत्नेन शोधयेत्। यच्चित्तस्तन्मयो मर्त्यो गुह्यमेतत्सनातनम्।चित्तस्य हि प्रसादेन हन्ति कर्म्म शुभाशुभम्।प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमक्षयमश्नुते" इति स्वभावतः शुद्धस्यात्मनो यतश्चित्तसम्पर्कादेव संसारित्वम पावित्र्यम् "ध्यायतीव लेलायतीव" इतिश्रुतेरूपपद्यते। अतश्चित्तस्यशोधनेनात्मनः संसारनिवृत्तिरूपपावित्र्यमुपपन्नम्भवति "तद्यथेषीकातूलमग्नौ प्रदूयतैवेहास्य सर्व्वे पाप्मानः प्रदूयन्ते" इति श्रुतेः " उपपातकेषु सर्व्वेषु पातकेषु महत्सु च। प्रविश्य रजनी पादम्ब्रह्मध्यानं समाचरेत्" इतिस्मृतेश्च चित्तप्रसादोपलक्षितात्मपावित्र्यसम्पत्या बन्धननिमित्तीभूतशुभाशुभकर्म्मपदवाच्यपुण्यपापरूपसकलकर्म्माणि अपावित्र्यरूपाणि ध्यानादिना विनाशयति। ततः प्रसन्नात्मा प्रसन्नचेताः सन् आत्मनि स्वस्वरूपेऽवस्थित्य ब्रह्मैवाहं न संसारीति पावित्र्यनिश्चयेन दृश्यजातम्परिहृत्य अनभिसन्धायेत्यर्थः। चिन्मात्ररूपेणावस्थाय अक्षयमनपायि यत्सुखं भूमाभिधान स्वरूपभूतं तदश्नुते इति निरुक्तश्लोकद्वयस्य सारांशतात्पर्य्यं वेदितव्यम्। निरुक्तपावित्र्यग्रहः समाधिदशायामुपलभ्यमानः व्युत्थानदशायामप्यनुवर्तमानो भवतीति वेदितव्यम्। तथा च स्मर्यते "परव्यसनिनी नारी व्यग्रापि गृहकर्म्मणि। तदेवास्वादयन्त्यन्तः परसंगरसायनम्। एवन्तत्त्वे परे शुद्धे धीरो विश्रान्तिागतः मा। तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि" इति। २।४।१९॥

## शरीरात्पार्थक्यग्रहः ।२।४।२०।

शरीरात् देहात्। पार्थक्यग्रहः पृथक्त्वनिश्चयः। अत्र भवतीति योजनीयम्। अभ्यासशालिनो लब्धभूमिकस्य योगिनः सत्त्वपुरुषान्यताख्यातिसम्पत्तौ सत्याम्प्रकृत्यसंश्लिष्टात्मा क्षेत्रज्ञोऽहम् क्षेत्रपदवाच्यात् जन्ममरणादिषड्विकारोपेतात् गुणमयात् वेद्यात् शरीरात् अशरीरी जन्मादिविकारशून्यो निर्गुणो वेत्ता साक्षीति भावः। अन्यो भवामीत्याकारकः प्रत्ययो जायते। इतिसाधकानुभूतिर्ज्ञातव्या। तथाच श्रूयते "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात् प्रबृहेन्मुञ्जादिवैषीकाम् धैर्य्येण तं विद्याच्छुक्रममृतम्" इति। तथाच स्मर्य्यते "इषीकाञ्च यथा मुञ्जात् कश्चिन्निष्कृष्य दर्शयेत्। योगी निष्कृष्य चात्मानं तथा पश्यति देहतः। मुञ्जं शरीरमित्याहुरिषीकामात्मनिश्रिताम्। एतन्निदर्शनम्प्रोक्तं योगविद्भिरनुत्तमम्" "देहस्थोऽपि न देहस्थो विद्वान्स्वप्नाद्यथोत्थितः। अदेहस्थोऽपि देहस्थो विभाति स्वप्नदृग्यथा ॥ २।४।२०।

## विषयेषु ममत्वमयथापूर्वम्भर्तृगृहोषितयोषितां नाभिगृहादिष्विव ।२।४।२ ।

विषयेषु आत्मीयत्वेनाभिमतेषु पुत्रकलत्रक्षेत्रवित्तादिषु ममत्वं ममता आत्मीयत्वबुद्धिरितियावत्। अयथापूर्व्वं यथापूर्व्वं तथा न अपूर्वरूपमिति यावत्। अत्र भवतीति योजनीयम् श्रीमान् सूत्रकारः ममत्वविषयकमयथापूर्व्वत्वं लौकिकदृष्टान्तेन प्रपञ्चयति–भर्तृगृहोषितयोषितां पतिसदननिवासिनीनां स्त्रीणां नाभिगृहादिष्विव पितृसदनादिष्विव एतावता ग्रन्थसन्दर्भेण यथा स्त्रियः पितृगृहस्थिताः पूर्व्वम्पितृगृहं तत्रत्यधनधान्यादिकञ्च ममेदम्भवतीति बुद्ध्या आत्मीयत्वेनाभिमनुते। सैव द्विरागमनान्तरम्पतिगृहगता सती पतिगृहादिकं वस्तुत आत्मीयत्वेनाभिमन्यमाना पितृगृहादिकं वस्तुतो ममेदं न भवतीति अभ्युपगच्छन्ती मम पितुरिदम्भवतीति मन्वाना पितृस्वत्वानुरोधेन तत्र स्वस्वत्वं मन्वाना अपूर्व्वरूपेण तदात्मीयत्वेनाभिमनुते। तथा शरीरादविविक्तात्मरूपः पुमान् यथाऽविवेकदशायामनात्मन्येव देहे आत्मत्वमभिमन्यमानो देहानुबन्धविषयान् वस्तुन आत्मीयत्वेनाभिमनुते। स च एव शरीरात् विविक्तात्मरूपः

सन् विवेकदशायामनात्मनि देहे आत्माभिमानशून्यो भूत्वा अनात्मीयभूतदेहानुबन्धविषयान् पुत्रकलत्रक्षेत्रवित्तादीन् वस्तुतो ममैते न भवन्तीति अभ्युपगच्छन् व्यवहारदशायां देहसम्बन्धानुरोधेनैव तत्र स्वसम्बन्धं मन्वानोऽपूर्व्वरूपेण तानात्मीयत्वेनाभिमनुते इति उक्तम्भवतीति वेदितव्यम् ॥२।४।२१॥

प्रकृतमेवार्थं श्रीमान् सूत्रकारो दृष्टान्तान्तरेण प्रपञ्चयति ।

## विभक्तभ्रातृधनादिवच्च ॥२॥४॥२२॥

विभक्तभ्रातृधनादिवत् पृथग्भूतभ्रातॄणां धनादीव। यथा पृथग्भूता भ्रातरः अविभक्तदशावैसादृश्येन परस्परं विभक्तधनधान्यादिकमस्माकमिदन्नभवतीति मन्वानाः तत्सम्बन्धिपूर्व्वकालिकस्वत्वानुरोधेन भ्रातृस्वत्वानुरोधेन वा अपूर्व्वरूपेण तदात्वेनाभ्युपगच्छन्ति । तथा विविक्तात्मरूपः पुमान् विवेकदशावैसादृश्येन पूर्व्वरूपेण विषयानात्मीयत्वेनाभ्युपगच्छन्तीति वेदितव्यम् । चेतिपुनरर्थकमव्ययम् ॥२।४।२२॥

लब्धभूमिकस्य योगिनः कुण्डलनीपदवाच्यशक्त्याः चक्राधिष्ठितात्मसमागमानुकूलमुत्थानम्प्रपञ्चयति ।

## कृतेशोपायनसमया शक्तिः । २ । ४ । २३ ।

कृतेशोपायनसमया कृतपरमेश्वरसमीपगमनव्यवस्थितिः । शक्तिः कुण्डलनी । अत्र भवतीति योजनीयम् । स्मर्य्यते च शक्तिसमयोक्तिः "येन व्याप्तमिदं सर्व्वं सर्व्वं वेत्ति च यः शिवः । यस्यान्तन्नैव जानामि तस्याहं शरणं व्रजे" इति । मूलाधारस्थितकुण्डलन्याः समीपनिवासी गुदाधारस्थितोऽपानवायुः परमेश्वरसमीपगमनरूपन्तदभिप्रायमवगत्य प्रियतमेन प्राणवायुना सह सम्भूय शक्तिप्रस्थानपथिगतान् कफादिरूपान् अर्गलानपनयति। इन्द्रियाणि निरोधयति । चक्राधिष्ठिताय देवाय तस्या उपायनम् वेत्रपाणिनरपालभट इव पुरत आवेदयन्निव उपगच्छति। तदानीमेव नरपालपुरोगामिवेत्रपाणिभटा इव प्रणवादय आविर्भूय भट्टोद्घोषोपमनादरूपेण राजयानोत्सवमिव शक्तियानोत्सवं सम्पादयति। ज्योतिश्च चन्द्रतारकादिरूपमन्तर्दृष्टिगोचरीभूतम् राजमार्गगतदीपमालिकादिवत् तदुत्सवमेव सम्पादयद्भवतीति वेदितव्यम्। योऽयं क्रमो निरूपितः स च कुण्डलनीबोधसमकालीनः तस्या एव विला-

सविशेष इति वेदितव्यम् । इदानीमयञ्जीवात्मा पुरुषोऽनात्मन्यात्मबुद्धिमपवदन् कृतकृत्योऽहम् शुद्धोऽहम् निश्शरीरोऽहम्मुक्तोऽहम् इत्याकारेण सुप्तोत्थितपुरुष इव स्वस्मिन् स्वप्नप्रपञ्चितचौरबन्धादिबुद्धिमपवदन् ब्राह्मणोऽहम् निरपराधोऽहमित्याकारेणेव आत्मानम्परिचिनोतीति अत्रसम्प्रज्ञातसमाधेः सम्पत्तौ सत्यां साधकेनात्मनःकृतकृत्यादिरूपं स्वरूपम्परिचीयत इतिश्रीमत्सूत्रकारस्य स्वारस्यं वेदितव्यम् । अस्यामेव भूमिकायां कृतकृत्यताग्रहश्चात्मनि पावित्र्यग्रहश्च शरीरात्पार्थक्यग्रहः इतिसूत्रत्रयमन्तर्भूतं वेदितव्यम् । निरुक्तक्रमोलब्धभूमिकानुभूतिगोचरोवेदितव्यः । शास्त्राणि च एतद्विषयकाणि शतसहस्रशः शास्त्रकारैः प्रदर्शितानि तान्यत्र ग्रन्थविस्तारभिया न लिखितानीति वेदितव्यम् । "विशोका वा ज्योतिष्मती"इतिपातञ्जलयोगसूत्रेण चन्द्रादित्यग्रहमणिप्रदीपादिषु प्रवृत्तिरुत्पन्ना इति "विषयवती वा प्रवृत्ति रुत्पन्ना मनसः स्थितिनिबन्धनी" एतत्सूत्रभाष्येण च प्रकृतम्पुष्टम्भवतीति वेदितव्यम् ॥२।४।२३।.

## अनन्तरं तत्सम्पत्तिः ।२।४।२४।

अनन्तरं शक्तिकर्तृकेशोपायनसमयकरणात् पश्चिमकाले । तत्सम्पत्तिः शक्तिकर्तृकेशोपायननिष्पत्तिः । अत्र भवतीति योजनीयम् । एतावता कुण्डलनी परमेश्वरसमीपगमनविषयकसमयङ्कृत्वा उत्थाय मूलाधारादिचक्रषट्कं विभिद्य योगिनां कर्म्मबन्धनं विच्छिद्य सहजावस्थापदवाच्यां समाहितस्थितिरूपिणीं जाग्रदाद्यवस्थात्रितयविलक्षणां तुर्य्यावस्थितिं सम्पाद्य सहस्रारपद्माधिष्ठितं स्वपतिम्परमेश्वरं समागच्छति । तथाच स्मर्य्यते "महीं मूलाधारे कमपि मणिपूरे हुतवहं स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि । मनोऽपि भ्रूमध्ये सकलमपि भित्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्या विहरसि" "उत्पन्न शक्तिबोधस्य त्यक्तनिःशेषकर्म्मणः योगिनः सहजावस्था स्वयमेवाभि जायते" 'कुण्डली कुटिलाकारा सर्प्पवत्परिकीर्त्तिता" "सा शक्तिश्चालिता येन स मुक्तो नात्र संशयः" "ततः पवित्रं परमेश्वराख्यमद्वैतरूपं विमलाम्बराभम् । यथोदके तोयमनुप्रविष्टन्तथात्मरूपन्निरुपाधि संस्थितः"इति । श्रूयते च "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" "तयोर्ध्वमायन्नमृतत्वमेति " ॥२।४।२४॥



## गानं दिव्यसुखावहम् २।४।२५।

गानं गीतम्। दिव्यसुखावहमलौकिकानन्दप्रदम्। अत्र भवतीति योजनीयम्। एतावता लब्धभूमिकस्य योगिनः योगमहिम्ना दिव्यसुखावहं गानं श्रवणगोचरम्भवतीत्युक्तम्भवति। निरुक्तगानम् बाह्याभ्यन्तरभेदेन द्विविधम्भवति। तत्र बाह्यं गन्धर्वाप्सरोनर्तक्यादिसंगीतं रागरञ्जितं सुस्वरं ग्राममूर्च्छनाद्युपेतमन्तरायरूपं स्वयमुपस्थितम्भवति। तथाचोक्तं शिवसंहितागम भोगरूपविघ्नोक्तिप्रकरणे "नृत्यङ्गीतं विभूषणम्" इत्यादि प्रकृतोऽर्थः। अव्यवहितोत्तरसूत्रव्याख्यानप्रमाणैरपि प्रमापितो भविष्यतीति वेदितव्यम्। आभ्यन्तरम् भाषाप्रसिद्धविहगादिरागोपेतं प्रणवादिविलम्बितध्वनिरूपम् अकृत्रिमं सिद्धिरूपमसाधकानुभूतिगोचरं वेदितव्यम् "ओंकारम कारोत्तारस्वरमूर्ध्वगतध्वनिम्" इत्यादिवाशिष्ठोक्तिः प्रकृतम्पोषयतीति वेदितव्यम्।२।४।२५

## उपलब्धिर्दिव्यविषयाणाम्। २।४।२६।

उपलब्धिः प्राप्तिः। दिव्यविषयाणां सुरसिद्धाप्सरःप्रभृतीनाम्। अत्र भवतीति योजनीम्। लब्धभूमिकस्य योगिनः समीपे देवादयो विघ्नरूपिण उपस्थीयन्ते। तथाचोक्तम् "स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणम् पुनरनिष्टप्रसङ्गात्" इतिपातञ्जलसूत्रे भाष्यकारैश्च "तत्रमधुमतीम्भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रन्ते। भोरिहास्यतामिह रम्यताम् कमनीयोऽयं भोगः। कमनीयेयङ्कन्या। रसायनमिदं जरामृत्युम्बाधते वैहायसमिदं यानममीकल्पद्रुमाः। पुण्या मन्दाकिनी। सिद्धा महर्षयः उत्तमा अनुकूला अप्सरसो दिव्ये श्रोत्रचक्षुषी। वज्रोपमः कायः स्वगुणैस्सर्वमिदमुपार्जितमायुष्मता। प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमित्येवमधीयमानः सङ्गदोषान् भावयेत्। घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशो योगप्रदीपस्तस्य चैते तृष्णायोनयो विषयवायवःप्रतिपक्षाः। स खल्वहम् लब्धावलोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्य्यामिति स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवंनिश्चितमतिः समाधिं भावयेत्। सङ्गमकृत्वा स्मयमपि न कुर्य्यात् इत्युच्यते।

क्वचित् सिद्धिरूपिणोऽपि सिद्धा उपस्थीयन्ते। तथाच "मूर्धज्योतिषि सिद्धदर्शनम्" इति पतञ्जलिना सूत्रितम्। तथाचोक्तं शिवसंहितायाम् "शिरःकपाले रुद्राक्षविवरं चिन्तयेद्यदा। तदा ज्योतिःप्रकाशस्याद्विद्युत्पुञ्जसमप्रभः। एतच्चिन्तनमात्रेण पापानां संक्षयो भवेत्। दुराचारो पि पुरुषो लभते परमं पदम्। अहर्निशं यदा चिन्तां तत् करोति विचक्षणः। सिद्धानां दर्शनं तस्य भाषणञ्च भवेद्ध्रुवम्" इति "यक्षराक्षसगन्धर्व्वा अप्सरोगणकिन्नराः। सेवन्ते चरणौ तस्य सर्वे तस्य वशानुगाः" इति।२।४।२६॥

## भीतिरपरिचितौ भूम्याः २।४।२७॥

भीतिर्भयम्। अपरिचितौ अपरिचये। भूम्या भूमिकायाः। अत्र भवतीति योजनीयम्। लब्धभूमिकस्य योगिनो भूमिकान्तरारोहणे तदपरिचये भयं भवतीति वेदितव्यम्। तथाचोक्तं कपिलगीतायाम् "प्राप्तकाले च विप्रर्षे मानसं भयमाप्नुयात्। तत्सर्वं कथयिष्यामि सावधानं शृणुष्व च। स्त्रीणामादौ यथा भीतिः पुरुषस्यादिसंगमे। तथाऽऽसां चित्तविक्षेपः प्राप्तानां स्वामिमन्दिरम्" इति "अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिभिः योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः" इत्यादिस्मृतिरपि प्रकृतार्थपोषिणीति वेदितव्यम्। यद्यपि निरुक्तभूमिकायां योगाङ्गभूतत्वात् सर्वथा निरतिशयानन्दस्यैव सम्भूतिरुपपद्यते। तथापि अत्र अपरिचितवस्तूपलब्धिः भीतिम्प्रयोजयति। यथा स्त्रीणां प्रथमपतिसमागमे विषयानन्दहेतौ सर्वथा सुखसम्भूतेरुपपत्तौ सत्यामपि पतिविलासाद्यपरिचितवस्तूपलब्धिःभयं प्रयोजयति। तथैवात्रापि अपरिचितभूमिकायां योगिनो भयमुपपद्यत इति वेदितव्यम्। दृश्यते च लोके सुखास्पदेऽपि शीतलमृदुनीरसरोवरे स्नातुः भयोपलब्धिः। प्रायोऽपरिचितवस्तवसहत्वं भवत्येवेति वेदितव्यम्॥२।४।२७॥

## निद्रारम्भे मुहुर्मूर्छा।२।४।२८।

निद्रारम्भे सुप्त्युपक्रमे। मुहुः वारम् वारम्। मूर्छा अर्थसम्पत्तिपदवाच्या अचेतनत्वमम्पन्ना सुषुप्तिविलक्षणा मुग्धावस्था। अत्र भवतीति योजनीयम्। तथाचोक्तम् अमनस्के "स्पर्शनं परतत्त्वस्य उत्थानञ्च पुनः पुनः। घर्मशान्तिः प्रजायेत मुहुर्निद्रा च मूर्छना" इति "स्वयं निद्राक्षानालक्षणम् छा" इतिपातञ्जलसूत्रमपि प्रकृतं पोषयतीति वेदितव्यम्। ननु

तिस्रोऽवस्था जीवस्य प्रसिद्धाः जाग्रत् स्वप्नःसुषुप्तमिति। चतुर्थी देहा दुत्क्रमणं मरणरूपा न तु पञ्चमी काप्यवस्था जीवसम्बन्धिनी श्रूयतेस्म र्यते वा। तस्माच्चतसृणामेवासामन्यतमा मूर्च्छा भवितुमर्हति इत्युपपत्तौ सत्याम् प्रसिद्धं जाग्रदाद्यवस्थानपदमन्तरा कुतःअप्रसिद्धम्मूर्च्छापदम- त्रोपात्तमिति प्रष्टव्ये प्रतिवचनम् नेयम्मूर्च्छावस्था जागरितम्भवितु- मर्हति इन्द्रियैर्विषयानुपलब्धेः। न स्वप्नः अत्र मनसा जाग्रदनुभूतविष- यानुपलब्धेः। न मरणम् अत्र प्राणोष्मणोरस्तित्वात्। मूर्च्छिते हि जन्तौ मरणामरणे निर्णेतुं तयोः संशयानाः पुरुषा उष्मणो भावाभावनिर्ण- यार्थं करतलेन हृदयदेशमालभन्ते। प्राणस्य च भावाभावनिर्णयार्थं घ्राणप्रदेशम्। अथ प्राणमुष्माणं वा प्रतिपन्ना अमृत्युमध्यवस्य- मूर्च्छावस्थां परिचाय्य संज्ञाप्राप्तये भिषजन्ति। यदि उष्मणः प्राणस्य च अस्तित्वमप्रतिपन्ना भवन्ति। तदा मृत्युं निश्चित्य संस्काराय श्मशानं नयन्ति। परिशेषादवशिष्टं सुषुप्तं भवितुमर्हति निःसंज्ञत्वा- मृतत्वरूपसुषुप्तगुणसद्भावात्। इत्येवं प्राप्ते निर्णीयते नेयं मूर्च्छा सुषु- प्तिरपि भवितुमर्हति वैसादृश्यात्। मूर्च्छितःकदाचिच्चिरमपि नोच्छ्वसिति। सवेपथुः भयानकमुखः विस्फारितनेत्रो दृश्यते। सुषुप्तश्च प्रसन्नमुखः तुल्यसमयं मुहुर्मुहुरुच्छ्वसिति। निमीलितनयनो निर्वेपथुश्च दृश्यते। तस्मात्परिशेषात् इयमवस्थितिः सुषुप्तस्य अर्द्धसम्पत्तिरित्यवगच्छामः असंज्ञाभावात् सुषुप्तिधर्म्मात्सम्पन्ना इतरस्माच्च निरुक्तवैसादृश्याद- सम्पन्ना इति वेदितव्यम्। यत्तूक्तं न पञ्चमी काप्यवस्था निगमे आगमे च श्रूयते स्मर्य्यते वा तदुच्यते कादाचित्कीयमवस्थितिरिति न श्रूयते स्मर्य्यते वा। प्रसिद्धिरस्या लोके आयुर्वेदे च सुषुप्त्यर्द्धसम्पत्तिस्वी- कारात्। न पञ्चमी गण्यते इत्यनवद्यं व्याख्यानं वेदितव्यम्। अत्र प्रसङ्गप्राप्ता मूर्च्छावस्था परिचिता इति वेदितव्यम्।२।४।२८।

## सान्निध्यञ्च मृत्योः। २। ४। २९।

सान्निध्यं सामीप्यम्। चेति पुनरर्थकमव्ययम्। मृत्योर्मरणस्य। अत्र भवतीति योजनीयम्।लब्धभूमिकस्य योगिनःप्राणशैथिल्योद्रेकात् प्राण- संचारमनोवाक्कायव्यापारराहित्यरूपमचेतयमानम्भयानकम्मरणवदव- स्थानम् सन्निधावुपजायते इतिसाधकानुभूतिगोचरावस्थितिर्वेदि- तव्या। तथाचोक्तं योगशास्त्रे"यथा दण्डहतः सर्पो दण्डाकारः प्रजा- यते। ऋज्वीभूता तथा शक्तिः कुण्डली सहसा भवेत्। तदा सा मर-

णावस्था जायते द्विपुटाश्रया" इति। तत्र योगिभिः सत्यपि मृत्युसाक्षात्कारे धैर्य्यमवलम्ब्य नेयं यथार्था शरीरादप्रसूतिरूपा मृतिः किन्तु योगभूमिकारूढ़ा तत्सादृश्योपेता अमृतादिसम्पत्तिपूर्वकालीना सिद्धिसूचिकेवेत्यवगम्य च न भेतव्यम्। किन्तु मृतिरेव योगमहिम्ना विजेतव्येति वेदितव्यम्"मृत्युञ्जयति योगवित्" इत्याद्युक्तिः योगिकर्तृकमृत्युजयम्प्रमापयतीति वेदितव्यम्।"सोमसूर्यातिसम्बन्धो जायते चामृताय वै। मृतावस्था समुत्पन्ना ततो वायुं विरेचयेत्"इत्युक्तिः शक्तिबोधानन्तरम्मृत्यवस्थोत्तरकालीनाममृतावस्थामवगमयतीति वेदितव्यम् ॥२।४।२९॥

## संविदश्चाविर्भावो विद्युद्वत् ॥ २ । ४ । ३० ।

संविदो ज्ञानस्याविर्भावःप्राकट्यम्। विद्युद्वत् तडिदिव। अत्र भवतीति योजनीयम्। लब्धभूमिकस्य योगिनो व्युत्थानदशायां ज्ञानस्पूर्वकाले कादाचित्कत्वेन तडिदिव उत्पत्तिविनाशशीलं झटिति स्फुरणरूपेण अभिव्यज्यमानम् तदैव विलीयमानम्भवतीतिसाधकानुभूतिगोचरं योगरहस्यम् वेदितव्यम्। "तज्जयात् प्रज्ञालोकः" इतिपातञ्जलसूत्रेण "तस्य संयमस्य जयात्समाधिप्रज्ञाया भवत्यालोको यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदी भवति"इति निरुक्तसूत्रभाष्येण च प्रकृतोऽर्थः पुष्टो भवतीति वेदितव्यम्। यथा मेघमण्डलीमत्यां रात्रौ अन्धंतमसि प्रसरति सति मुहुर्मुहुर्विद्युत् स्फुरन्ती सती लोकानां तमः पौनःपुन्येन निवारयति। तथात्र मृत्युदशायाम्महामोहवत्याम् सन्निहितायाम् मुहुर्मुहुः स्फुरन्ती संवित् योगिनां महामोहं पौनःपुन्येन निवारयतीति संविदो विद्युत्सादृश्यतात्पर्य्यं वेदितव्यम्। "विद्युल्लव इवाम्बुदे" "संविदं लभतेऽभ्यासात्" इत्याद्युक्तिः योगाभ्यासात् संविदाविर्भावं गमयतीति वेदितव्यम् ॥२।४।३०।

## ततः संशयविच्छित्तिः । २ । ४ । ३१ ।

ततो निरुक्तसंवित्सम्पत्त्यनन्तरम्। संशयविच्छित्तिःसन्देहविच्छेदः। अत्र भवतीति योजनीयम्। तथाच श्रूयते "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"इतिलब्धभूमिको योगी यत्र यत्र गुरुमुखात् शास्त्राचाधिगतेषु कालवञ्चनतत्वदर्शनादिरूपयोगलभ्यपदार्थेषु संशयानो भवति तांस्तानत्र भूमि-

कायां समधिगत्य तत्र तत्र निःसंशयानो भूत्वा श्रद्दधाति । विपरीतां भावनां जहाति चा इति साधकानुभूतिर्वेदितव्या । तथा च सूत्रितम् श्रीमता पतञ्जलिना "ऋतम्भरा तत्र प्रज्ञा" इति ॥२।४।३१।

## अनासक्तिश्च व्यवहारे । २ । ४ । ३२ ।

अनासक्तिरसङ्गःचेतिपुनरर्थकमव्ययम्। व्यवहारे लौकिकाचरणे। अत्र भवतीति योजनीयम्। योगारूढ़स्य योगिनोऽनिर्वचनीयालौकिसुख-सम्पत्तौ सत्यां पुरुषख्यातावुदितायां वैराग्यदार्ढ्यं भवति । ततश्च व्य-वहारेऽनासक्तिर्भवतीति वेदितव्यम् । तथाच सूत्रितम् श्रीमतायोगाचा-र्य्येण पतञ्जलिना "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति। तथात्र स्म-र्य्यते "न ह्याहारादि सन्त्यज्य भरताद्याः स्थिताः क्वचित् । काष्ठपाषाण-वत् किन्तु सङ्गभीता उदासते । सङ्गो हिबाध्यते लोके निःसङ्गः सुख-मश्नुते । तेन संगः परित्याज्यः सवथा सुखमिच्छता । न द्वेष्टि सम्प्रवृ-त्तानि न निवृत्तानि कांक्षति।उदासीनवदासीन इतिग्रन्थिभिदुच्यते।श्रमां-शस्य तिरस्कारादधिष्ठानप्रधानता । यदा तदा चिदात्माहमसङ्गोऽस्मी-तिबुध्यते। दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया। परमानन्दपूर्णोऽहं संसरामि किमिच्छया। अनुतिष्ठन्तु कर्म्माणि परलोकयियासवः। सर्व-लोकात्मकः कस्मादनुतिष्ठामि किं कथम् । व्याचक्षन्ताञ्च शास्त्राणि वेदानध्यापयन्तु वा। येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः" इति ॥२।४।३२।

## अन्योन्यं विरुद्धस्वभावानां गुणत्रयजन्मनां विक-ल्पेन तरङ्गवत् प्रवृत्तिः २ । ४ । ३३ ।

अन्योन्यविरुद्धस्वभावानाम्परस्परविलक्षणप्रकृतीनाम्। गुणत्रयज-न्मनां सत्त्वरजस्तम इत्यभिधानगुणेभ्यो जातानाम् । विकल्पेन एकमेकं गुणमभिभूय अपरस्यापरस्य गुणस्योदयेन । तरङ्गवत् प्रवृत्तिः वीचि-रिव प्रवर्त्तनम् । अत्र भवतीति योजनीयम् । तथाचोक्तम्मार्कण्डेयपुराणे "ब्रह्मसङ्गि मनः कुर्वन्नुपसर्गात् प्रमुच्यते । उपसर्गैर्जितैरेभिरुपसर्गा-स्ततः पुनः । योगिनः सम्प्रवर्तन्ते सात्त्वराजसतामसाः" इति ॥ २।४।३३

## सत्त्वभूमिः पूर्वमतिथिवत् ।२।४।३४॥

सत्त्वभूमिः सात्त्विकी भूमिका। पूर्वम् प्राक्। अतिथिवत् आगन्तुरिव अत्र भवतीति योजनीयम । प्रसंगादतिथिं लक्षयामि व्यासवाक्येन

"दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितम्। अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः" इति। यथाऽतिथिः कस्यचिद्गृहमकस्मादागच्छति अल्पकालं स्थित्वा गच्छति च।तथेयं सत्त्वभूमिर्गृहं बुद्धिमकस्मादागच्छति।किञ्चिदल्पकालं स्थित्वा गच्छति चेति निदर्शनम् वेदितव्यम्। तदानीं रजोभूमिस्तमोभूमिश्च चिरस्थायित्वरूपेण गृहनिवासिन्याविव चिरकालं निवसत इति तात्पर्यं वेदितव्यम्। सत्त्वरजस्तमांसि प्रकाशक्रियास्थितिशीलानि क्रमेण वेदितव्यानि। तथा परिचिता एते गुणाः "प्रकाशक्रियास्थितिशीलम् भूतेन्द्रियात्मकम् भोगापवर्गार्थम् दृश्यम्" इतिपातञ्जलसूत्रीयभाष्ये भाष्यकारैः "प्रकाशशीलं सत्त्वम् क्रियाशीलं रजः स्थितिशीलं तम इति। एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगविभागधर्माणः इतरेतरोपाश्रयेणोपार्जितमूर्त्तयः परस्पराङ्गाङ्गित्वेऽपि असमभिन्नशक्तिप्रविभागास्तुल्यजातीयास्तुल्यजातीयशक्तिभेदानुपातिनः" इत्यादिव्याख्यानेनेति वेदितव्यम्। अपिच स्वस्ववृत्तिप्रदर्शनपूर्वकमेतेषां परिचयः स्मर्यते "वैराग्यं क्षान्तिरौदार्य्यमित्याद्याः सत्त्वसम्भवाः। कामक्रोधौ लोभयत्नावित्याद्या रजसोत्थिताः। आलस्यभ्रान्तितन्त्राद्या विकारास्तमसोत्थिताः। सात्त्विकैः पुण्यनिष्पत्तिःपापोत्पत्तिश्च राजसैः। तामसैर्नोभयं किन्तु वृथायुःक्षपणं भवेत्" इति। एतावता साधके प्रथमं साधनावसरे वैराग्यादिशीला सत्त्वभूमिरचिरस्थायिनी भवति। कामादिशीला रजोभूमिःआलस्यादिशीला तमोभूमिः चिरस्थायिन्यौ भवतः इत्युक्तम्भवति। प्रकृतोऽर्थः साधकानुभूतिवेद्यो वेदितव्यः ॥ २।४।३४।

## पश्चादितरावेव तद्वत् ।२।४।३५॥

पश्चादुत्तरकाले साधनदार्ढ्ये। इतरावेव रजस्तमोगुणावेव।तद्वत् अतिथिवत्।अत्र भवत इति योजनीयम्।लब्धभूमिकस्य योगिनःअभ्यासक्रमेण अध्यात्मप्रसादावसरे निरुक्तरजस्तमोभूम्यौ अचिरस्थायिन्यौ भवतः।सत्त्वभूमिश्च चिरस्थायिनीत्यर्थो वेदितव्यः।अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छोऽध्यात्मप्रसादः सत्वगुणमयः समाधिवैशारद्यरूपो भूतार्थविषयः क्रमानुरोधिस्फुटप्रज्ञालोकः आविर्भवति।तथाच स्मर्य्यते "प्रज्ञाप्रासादमारुह्य अशोच्यःशोचतो जनान्।भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति" इति प्रकृतोऽर्थः साधकानुभूतिगोचरो वेदितव्यः ॥ २।४।३५।

## सर्वे तु निर्गुणे ।२।४।३६॥

सर्वे सत्त्वरजस्तमोगुणाः। तुशब्दः प्राक्तनीं सगुणस्थितिं व्यावर्तयति। निर्गुणे गुणरहिते। अत्र चेतसि अतिथिवद् भवन्तीतियोजनीयम्। समाहितचित्तस्य लब्धभूमिकस्य योगिनः अभ्यासक्रमेण चेतसि निर्मलनीरसरसि शुद्धबुद्धस्वरूपात्मनि विधूताशेषगुणकल्मषकर्दमे विविक्ते प्रकृत्यसंश्लिष्टे सति सर्वेऽपि गुणा अतिथिवदचिरस्थायिनो भवन्ति। न कोऽपि चिरस्थायीतितात्पर्यं वेदितव्यम्। तदानीं चेतोगृहस्य सर्वेऽपि गुणा अतिथय एव भवन्ति। न कोपि तत्र निवसतियथा शून्यगृहेऽतिथयो गत्वापि न तिष्ठन्ति द्रुततरमेवापसरन्तीतितात्पर्यं वेदितव्यम्। तथा च स्मर्यते "चतुर्विधा मनोऽवस्था विज्ञातव्या मनीषिभिः। विक्षिप्तञ्च गतायातं सुश्लिष्टं च सुलीनकम्। विक्षिप्तं तामसं प्रोक्तं राजसन्तु गतागतम्। सुश्लिष्टं सात्त्विकं प्रोक्तं सुलीनं गुणवर्जितम्। विक्षिप्तं च गतायातं विकल्पविषयग्रहम्। सुश्लिष्टं च सुलीनं च विकल्पविषयापहम्' इति। तथा च सूत्रितम् श्रीमता पतञ्जलिना 'प्रशान्तवाहिता संस्कारात्''इति। इत्याद्युक्तिः पूर्वनिरुक्तां विकल्पेन गुणत्रयोपलब्धिं प्रमापयतीति वेदितव्यम् ॥२।४।३६।

## अन्तर्गा दृष्टिः ।२।४।३७॥

अन्तर्गा अन्तर्मुखी। दृष्टिर्दर्शनम्। अत्र भवतीति योजनीयम्। लब्धभूमिकस्य योगिन आभ्यन्तरिकवस्तूपलब्धिप्रयोजिका अन्तर्मुखी दृष्टिर्जायते इति योगानुभूति र्वेदितव्यातथा च सूत्रितं श्रीमता पतञ्जलिना"विशोका वा ज्योतिष्मती'इति। एतत्सूत्रीयभाष्ये भाषितञ्चभाष्यकरैः "प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते। हृदयपुण्डरीके धारयतो या बुद्धिसंवित् बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं तत्र स्थितिवैशारद्यात् प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते'' इत्यादि। एतावता योगिन आभ्यन्तरिकं प्रदेशं धारयतः सूर्येन्दुग्रहमणिप्रभाकारमन्तर्दृष्टिगोचरं भवतीत्युक्तं भवति। अस्यामेव भूमिकायामान्तरंयोगशास्त्रप्रसिद्धं मेरुदण्डकुण्डलनीशक्तिहृदयांदितराचक्रस्थितलिंगशक्त्यादि योगिनोऽन्तर्दृष्ट्या प्रपश्यन्तीति योगरहस्यं वेदितव्यम्। कदाचिच्च भ्रूमध्यदेशीयान्तरप्रदेशे लौकिकमन्दिरतत्रत्यप्रतिमादिवत् दिव्यमन्दिरतत्रत्यप्रतिमादि च वस्तु योगिभिरालोक्यत इति योगरहस्यं योग्यनुभूतिगोचरं वेदितव्यम् ॥२।४।३७।

## दर्शनञ्च गुरोः । २ ४ । ३८ ॥

दर्शनम् अवलोकनम् । चेतिपुनरर्थकमव्ययम । गुरोः देशिकस्य । अत्र भवतीतियोजनीयम् । लब्धभूमिकस्य योगिनः समाहितस्थितौ पुरुषविशेषः करुणापूरितहृदयः संसारिणमुद्धर्तुकामोऽतीद्रियो विज्ञानमुपदिशन् परतत्वं प्रकाशयन् शान्तिं सम्पादयन् अन्तर्दृष्टिगोचरीभवतीतियोग्यनुभूतिर्वेदितव्या । तथाचोक्तं हठसंकेतचन्द्रिकायाम "आज्ञायां वर्त्तते तत्र प्रथमं गुरु दर्शनम्" इति । उक्तञ्च "तत्र निरतिशयं सर्वज्ञबीजम्" इति पातञ्जलसूत्रभाष्ये भाष्यकारैः "यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजम् । एतद्धि वर्द्धमानं यत्र निरतिशयं स सर्वज्ञः । अस्ति काष्ठाप्राप्तिः सर्वज्ञत्वबीजस्य सातिशयत्वात् परिणामवदिति। यत्रकाष्ठाप्राप्तिर्ज्ञानस्य ससर्वज्ञः । स च पुरुषविशेष इति सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति । तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्यन्वेष्या । तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम् । ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति । तथाचोक्तम् "आदिविद्वान् निर्म्माणचित्तमधिष्ठाय कारुण्याद भगवान् परमर्षिरासुरय जिज्ञासमानाय तंत प्रोवाच" इति। अपिच सूत्रितं श्रीमता पतञ्जलिना "स एष पूर्वेषामपिगुरुः कालेनाऽनवच्छेदात्" इति । एतावता ईश्वराभिन्नगुरुरत्रोपलभ्यत इति व्यक्तमितिवेदितव्यम् । इत्थं गुरुदर्शनरुपा दिव्यसम्पत्तिः यस्यानेकजन्मसमर्जितपुण्यपुञ्जस्य भाग्यवतो योगिनो जायते। स हि गुरुमुखगलितज्ञानामृतपानमत्तः तदुक्त्येकचिराः न गुरोः सर्वावयवं युगपदीक्षितुं पारयति। किन्तु तत्कतिपयावयवावलोकनैकरसास्वादनन्तु भवतीतियोगरहस्यं योग्यनुभूतं वेदितव्यम्। नात्र अकथनीयार्थस्य निर्मलमनोमात्रगोचरस्य प्रकथने वयं प्रभवामः। एकदेशमात्रं शिष्यप्रतीतिप्रसवमत्रोपपादितमितिवेदिव्यम् ।२।४।३८।

## ततः स्वरूपदर्शनम् ।२।४।३९॥

ततः गुरुदर्शनानन्तरं । स्वरूपदर्शनं स्वात्मावलोकनम् । अत्र भवतीतियोजनीयम् । लब्धभूमिकस्य योगिनः साकारनिराकारभेदेन द्विविधः स्वरूपसाक्षात्कारो जायते । लब्धभूमिको योगी स्वच्छं हंसस्वरूपमात्मानं पश्यति । तथाचोक्तमुत्तरगीतायाम् "यावत्पश्येत् खगाकारं तदा

कारं विचिन्तयेत्" इति। कश्चित् कदाचित्सवितृमण्डमध्यवर्त्तिनं भगवदभिन्नमात्मानं पश्यति। तथा च स्मर्यते "ध्येयः सदा सवितृमण्लडमध्यवर्त्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः" इति श्रूयते च "सूर्यमण्डलान्तर्वर्त्तिनो देवस्य प्रत्यगात्मरूपत्वम् यत्तेरूपं कल्याणतमं तत्ते पश्यामि योऽसावादित्ये पुरुषः सो ऽसावहम्" इति। कश्चित्कदाचित्सूर्यरूपिणमात्मानं पश्यति। तथा च भगवद्वाक्यम् "यदादित्यमयं तेजो मम तेजस्तदर्जुन। आदित्यं ये प्रपश्यन्ति मां पश्यन्ति न संशयः" स्मर्यतेपि "यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम् सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु माँ तत्सवितुर्वरेण्यम्" इति कदाचिद्बहिर्देशीयम् विद्युदिव तेजोरूपिणं स्फुरन्तमात्मानं योगिनः पश्यन्ति इति योगरहस्यं योग्यनुभूतगोचरम् वेदितव्यम्। तथाचोक्तं योगशास्त्रे "ज्योतीरूपमशेषबीजमखिलं देदीप्यमानं परम्। तत्त्वं तत्पदमेति वस्तु परमम् वाच्यं किमत्राधिकम्" इति। कश्चित्कदाचिदादर्शतलप्रतिभातं करचरणाद्यवयववत्स्वाकारमिव अन्तः प्रतिभातं करचरणाद्यवयववत् स्वाकारं पश्यति इति योगरहस्यं योग्यनुभूतिगोचरं वेदितव्यम्। एवं नानाप्रकारेण साकारं स्वात्मानं लब्धभूमिको योगी साक्षात् करोतीति वेदितव्यम्। अत्र योगिभिः समाहितचित्तैः प्रायः सम्प्रज्ञातसमाधौ साकारस्वरूपः स्वात्मा परिचियत इति श्रीमद्गुरुवरसूत्रकारस्वारस्यं वेदितव्यम्। तथाचोक्तम्भारते "यथाहि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति। तथारूपमिवात्मानं साधु युक्तःप्रपश्यति" इति। एवं साकारस्वरूपसाक्षात्कारम्प्रतिपाद्य निराकारस्वरूपसाक्षात्कारः प्रतिपाद्यते। तथाहि लब्धभूमिको योगी सम्प्रज्ञातसमाधौ निरावरणमात्मानं पश्यति। एकाग्रीभूतया शुद्धसूक्ष्ममनोवृत्त्या प्रतिपद्यत इति यावत्। तथा च स्मर्यते "अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम्। युञ्जन्तः सिद्धमात्मानं यथा पश्यन्ति योगिनः। तस्योपदेशं वक्ष्यामि यथावत्त्वं निबोध मे। यैर्द्वारैश्चारयन्नित्यम्पश्यत्यात्मानमात्मनि। इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत्। तीव्रं तप्त्वा तपः पूर्वं मोक्षयोगं समाचरेत्। तपस्वी सततं युक्तो योगशास्त्रमथाचरेत्। मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि। स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि। तत एकान्तशीलः स पश्यत्यात्मानमात्मनि" इति। तथा च भगवद्वाक्यम् "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति। अत्र सम्प्रज्ञात

समाधौ निश्चयशुद्धसत्त्वचित्त्वादिसम्पन्नस्वरूपसम्पत्तिनिष्पत्तिः परिचीयत इति श्रीमद्गुरुवरसूत्रकारस्वारस्यं वेदितव्यम्। मनोवाक्कायाशेषवृत्तिनिवृत्तिस्वभावा या स्थितिः सैव स्वरूपपदवाच्या भवतीति वृद्धसम्मतिर्वेदितव्या। तथा च स्मर्यते "सर्वं होपरतिस्तनुः" इति। यथा भारव्यपगमे पथिकः छायासु विश्राम्यति तथैवायम् स्वरूपसम्पत्तौ समाहितो योगी सांसारिकायासरूपदुःसहभारनिवृत्त्यनुकूलमनुत्तमसुखमूलं शाश्वतं स्वसंवेद्यं नैसर्गिकमतिसुमधुरं शान्तिरसमास्वादयतीति वेदितव्यम्। "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति पातञ्जलसूत्रमपि प्रकृतं पोषयतीति वेदितव्यम्। तथाचोक्तं योगशास्त्रे "आत्मनात्मनि आत्मानं दृष्ट्वानन्तं सुखात्मकम्। विस्मृत्य रमते विश्वं समाधेस्तीव्रतस्तथा॥ २।४।३९॥

## यथाशास्त्रं यथाक्रमम्। २।४।४०।

यथाशास्त्रं शास्त्रानुसारेण। यथाक्रमम्। अत्र स्वरूपदर्शनम्भवतीति योजनीयम्। तथाचोक्तं कपिलगीतायाम् "कोटिसूर्य्यप्रतीकाशं चन्द्रकोटिसुशीतलम्। यथोक्तं वेदशास्त्रैस्तद्ब्रह्म द्रष्टव्यं हि धीमताम्" इति।२।४।४०

## तत आनन्दप्रचयोत्थानम्। २।४।४१।

ततः स्वरूपदर्शनानन्तरम्। आनन्दप्रचयोत्थानम् सुखसन्तानसमुद्गमः। अत्र जायते इति योजनीयम्। तथाचोक्तं योगशास्त्रे "इन्द्रियाणां मनोनाथो मनोनाथस्तु मारुतः। मारुतस्य लयो नाथः स लयो नादमाश्रितः॥ सोऽयमेवास्तु मोक्षाख्यो मास्तु वापि मतान्तरे। मनः प्राणलये कश्चिदानन्दः सम्प्रवर्त्तते। अमृतोद्दीपिनी विद्या निरपायानिरञ्जना। अमनस्केव सा काचिज्जयत्यानन्ददायिनी। उत्पन्नशक्तिबोधस्य त्यक्तनिश्शेषकर्मणः। योगिनः सहजाऽवस्था स्वयमेव प्रजायते" इति "प्रणष्टोच्छ्वासनिःश्वासः प्रध्वस्तविषयग्रहः। निश्चेष्टो निर्गतारम्भोत्थाननं याति योगवित्" इति च अमनस्कोक्तिः प्रकृतं पोषयतीति वेदितव्यम्॥२।४।४१॥

## शून्यस्यापि तद्वत्। २।४।४२।

शून्यस्य बाह्याभ्यन्तरिकमनोवृत्त्यभिभावकावस्थानविशेषस्य। स्वरूपभूतस्य। अपीति समुच्चये। अत्रोत्थानमिति योजनीयम्। तद्वद् आनन्दप्रचयोत्थानवत्। अत्र भवतीति योजनीयम्। तथाचोक्तमुक्तगीतायाम्

"ऊर्ध्वशून्यमधश्शून्यं मध्यशून्यं यदात्मकम्।सर्वशून्यं स आत्मेति समाधिस्थस्य लक्षणम्" इति। अत्र शून्योत्थानं सिद्धिरूपं वेदितव्यम्।इतरत्र साधनरूपेणापि भवतीति वेदितव्यम्। तथाहि भर्तृहरिं प्रति गोरक्षवाक्यम् "विषयेभ्यः समाहृत्य मनः शून्ये निवेशय" इति ॥२।४।४२॥

## लीनं तत्र विज्ञानम् । २ । ४ । ४३ ।

लीनं लयं गतम्। तत्र शून्ये। विज्ञानम्मनः।अत्र भवतीति योजनीयम् "विविधैरासनैः कुम्भैर्विचित्रैःकरणैरपि। प्रबुद्धायां महाशक्तौ प्राणःशून्ये प्रलीयते" इति योगोक्तिः। तत्र मनःसमानवृत्तिकप्राणलयं प्रतिपादयन्ती मनोलयमपि प्रमापयतीति वेदितव्यम्। श्रीमान् सूत्रकारः अनेन सूत्रेण पूर्वोक्तशून्यस्वरूपं परिचाययतीति वेदितव्यम् ॥२।४।४३॥

## तदाविषयाणामपरिग्रहः २ । ४ । ४४ ।

तदा विज्ञानलये चित्तवृत्तिनिरोधेऽसम्प्रज्ञातसमाधिपदवाच्यस्वरूपप्रतिष्ठायामितियावत्। विषयाणां जीवात्मबन्धनभूतानां शब्दस्पर्शरूपरसगन्धानाम्। अपरिग्रहोऽनुपलब्धिः।अत्र भवतीति योजनीयम्। तथाचोक्तं श्रीमता व्यासेन "योगश्चित्तवृत्तिनिरोधः" एतत्सूत्रीयभाष्ये "न तत्र किञ्चित्सम्प्रज्ञायते" इति। अनेनापि सूत्रेण श्रीमान् गुरुवरः सूत्रकारः पूर्वोक्तशून्यं परिचाययतीति वेदितव्यम् "क्व चैष व्यवहारो वा क्व च सा परमार्थता। क्व सुखं क्व च वा दुःखं निर्विषयस्य मे सदा" इत्यष्टावक्रगीतोक्तिरपि प्रकृतं पोषयतीति वेदितव्यम् ॥२।४।४४॥

## संसृतौ पुनः प्रत्यावर्त्तनम् । २ । ४ । ४५

संसृतौ संसारपदवाच्यव्यवहारदशायाम्। पुनः समाध्यनन्तरम्। प्रत्यावर्त्तनम्प्रत्यावृत्तिः। अत्र भवतीति योजनीयम्। एतावता एतदुक्तं भवति समाहितो योगी समाधितो व्युत्थितः सन् पुनराहारादसांसारिकव्यवहारवान् भवति। न केवलं निष्क्रियःसन् मूकवत्तिष्ठति। ननु योगिनां व्युत्थानदशायाम् सामान्येन सांसारिकजनवद् व्यवहाराभ्युपगमे कथं संसारिजनवैपरीत्येन तेषां दुःखनिवृत्तिप्रज्ञाप्रतिष्ठाचेति शंकायाम् गीतावाक्यं समाधत्ते "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति। प्रसादे सर्वदुःखानां हानिरस्योपजायते। प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवति-

ष्ठते "इति "वृत्तिसारूप्यमितरत्र" इति पातञ्जलसूत्रम्प्रकृतम्पोषयतीति वेदितव्यम ॥२।४।४५॥

## सुप्तोत्थितवत् ॥ २ । ४ । ४६ ।

सुप्तोत्थितवत् यथा पूर्वं सुप्तो जनः निष्क्रियः सन् पश्चादुत्थितः क्रियावान् भवति। तथा पूर्वं समाहितो निर्व्यवहारः सन् पश्चाद्व्युत्थितः व्यवहारवान् भवतीति तयोः सादृश्यं वेदितव्यम्। यद्वा यथा सुप्तः पुरुष उत्थितः सन् सौप्तिकमर्थमनृतं जानन् तत्र निःसंगो भवति। तथाऽयम् योगिजनः स्वप्नरूपाज्ञानदशानुभूतमर्थं जाग्रद्ब्रह्मज्ञानदशासम्पन्नः सन् अनृतं जानन् तत्र निःसङ्गो भवति। तथाच स्मर्यते "निःसङ्गः प्रज्ञया भवेत्" इति "गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते" इति भगवदुक्तिरपि प्रकृतं पोषयतीति वेदितव्यम् ॥२।४।४६॥

## प्रमाणनैरपेक्ष्यम्प्रवृत्तौ ।२।४।४७।

प्रमाणनैरपेक्ष्यम् प्रमाणस्य विधिनिषेधवाक्यस्य नैरपेक्ष्यम् निरपेक्षत्वम्प्रवृत्तौ शास्त्रीयलौकिकाचरणे। अत्र भवतीति योजनीयम्। तथाचोक्तम् अष्टावक्रगीतायाम् "क्व प्रमाता प्रमाणं वा क्व प्रमेयं क्व च प्रमा। क्व किंचित् केन किंचिद् वा सर्वदा विमलस्य मे। क्व विक्षेपः क्वचैकाग्र्यं क्व निरोधः क्व मूढ़ता। क्व हर्षः क्व विषादो वा सर्वदा निष्क्रियस्य मे" इति "निस्त्रैगुण्ये पथि विचरताम् को विधिः को निषेधः" इत्यादिशिष्टोक्तिरपि प्रकृतं पोषयतीति वेदितव्यम् ॥२।४।४७।

## विरतौ सिद्धिसमागमः ।२।४।४८।

विरतौ वैराग्ये। सिद्धिसमागमः मुक्तिलाभः। अत्र भवतीति योजनीयम्। तथाच श्रूयते "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति। यद्वा सिद्धिशब्दात् अणिमाद्यष्टविधकायसिद्धिः दूरश्रुत्यादीन्द्रियसिद्धिश्च वेदितव्या। भवति चैषा सिद्धिः अशुद्ध्यावरणमलरूपरागक्षयात्। तथा च पातञ्जलसूत्रम् "कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" इति। उक्तञ्चात्र भाष्ये श्रीमता व्यासेन "निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलम् तदाऽऽवरणमलापगमात् कायसिद्धिः अणिमाद्या, तथेन्द्रियसिद्धिः दूराच्छ्रवणदर्शनाद्येति" इति। अत्र तपश्शब्देन "शरीरशोषणं प्राहुः

तापसास्तप उत्तमम्" इति स्मृतेः कृच्छ्रचान्द्रायणसान्तपनादिव्रतम् जिघत्सापिपासाशीतोष्णादिद्वन्द्वसहनं वा वेदितव्यम्। यद्वा "यस्य ज्ञानमयं तपः" इतिश्रुतेः ज्ञानं वेदितव्यम्। ततश्च तत्साधनीभूतयोगसांख्यमपि अभ्युपगन्तव्यम् इति वेदितव्यम्। "प्रातिभः श्रावणो दैवो भ्रमावर्तौ तथापरौ। पञ्चैते योगिनां योगविघ्नाय कटुकोदयाः। वेदार्थाः काव्यशास्त्रार्था विद्याशिल्पाद्यशेषतः। प्रतिभान्ति यदेतस्य प्रातिभः स तु योगिनः। शब्दार्थानखिलान्वेत्ति शब्दं गृह्णाति चैव यत्। योजनानां सहस्रेभ्यः श्रावणः सोऽभिधीयते। समन्ताद् वीक्ष्यते चाष्टौ स यदा देवतोपमः। उपसर्गं तमप्याहुर्दैवमुत्तमवद्बुधाः। भ्राम्यते यन्निरालम्बं मनोदोषेण योगिनः। समस्ताचारविभ्रंशात् भ्रमः स परिकीर्तितः। आवर्त्त इव तापस्य ज्ञानावर्तो यदाकुलः। नाशयेच्चित्तमावर्त्त उपसर्गः स उच्यते" इति मार्कण्डेयपुराणोक्तिरपि प्रकृतं पोषयतीति वेदितव्यम्। २।४।४८।

इति परमपूज्यपादश्रीमद्योगदत्तशर्मकृतामृतोपदेशे पूज्यपाद श्रीमद्योगदत्तशर्मशिष्यश्रीमत्सत्यनारायणशर्मकृतभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः॥

समाप्तश्चायमध्यायः।

करुणापूरितहृदयः शिष्यानुद्धर्त्तुकामः श्रीमान् गुरुवरः सूत्रकारः प्रथमाध्याये विज्ञानसाधनभूतं योगसांख्यं प्रतिज्ञाय द्वितीयाध्याये योगमुपदिश्य इदानीं तृतीयाध्यायमारभमाणः सांख्यमुपदिशति—

## प्राकृतेषु वस्तुषु दोषदर्शनपुरःसर आत्मविवेकः सांख्यम्॥ ३। १। १॥

श्रीमान् गुरुवरः सूत्रकारः कपिलाद्यभिहितविलक्षणरूपि सांख्यं परिचाययति--प्राकृतेषु प्रकृतिविकारेषु मायिकेष्वितियावत्। वस्तुषु पदार्थेषु। दोषदर्शनपुरःसरः क्षणभंगुरत्वाद्यवगुणदृष्टिपूर्वक वैराग्यवलितः। आत्मविवेकः सत्वपुरुषान्यताख्यातिसचिवः प्रकृतिविविक्तनिर्गुणनिर्दुष्टपुरुषविचारः सांख्यम्। संख्यायन्ते परिचीयन्ते नियतसंख्यया पुरुषप्रकृतिमहत्तत्वादितत्वान्यस्मिन्निति। संख्यायते सम्यग् ज्ञायते पुरुषोऽस्मिन्निति वा सांख्यपदव्युत्पत्तिरपि एतत्स्वारस्यमनुमोदत इति वेदितव्यम्। तथा स्मर्यते "अलमर्थेन कामेन सुकृतेनापि कर्मणा। एभ्यः संसारकान्तारे न विश्रान्तमभून्मनः।

साकारमनृतं विद्धि निराकारन्तु निश्चलम् । एतत्तत्त्वोपदेशेन न पुनर्भवसम्भवः । अहो निरञ्जनः शान्तो बोधोऽहं प्रकृतेः परः एतावन्तं महाकालं मोहेनैव विडम्बितः । अनृतं सर्वमेवेदं तापत्रितयदूषितम् । असारं निन्दितं हेयमिति निश्चित्य शाम्यति" इति ॥३।१।१।

हेयोपादेयार्थबोधस्य आत्मविवेकोपयोगित्वात् श्रीमान् गुरुवरः सूत्रकारो वक्ष्यमाणसूत्रेण तावर्थौ प्रतिजानाति—

## हेयोपादेयौ ज्ञातव्यौ । ३ । १ । २ ।

हेयोपादेयौ हेयस्त्याज्योऽर्थः उपादेयो ग्राह्योऽर्थः तौ।हेयोपादेयौ ज्ञातव्यौ। अत्र भवत इति योजनीयम् ॥३।१।२।

## हेयन्दुःखमविधेयम् ३ । १ । ३ ॥

हेयं त्याज्यम् । दुखं कष्टम् । अविधेयम् अविधिप्रचोदितम् । एतावता एतदुक्तं भवति वृथोपवासादि शास्त्रेणाऽविधीयमानं यत् किञ्चित् दुःखजनकं कर्म तन्न कर्त्तव्यम् । मनोऽव्यग्रीकरणेन विक्षेपमोहादिहेतुत्वात् वृथापीडाजनकत्वेनाऽधर्महेतुत्वाच्च । तथाचोक्तम्भगवद्गीतायाम् "अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दम्भाहंकारसंयुक्ताः कामरागबलान्विताः । कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । माञ्चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान्" इति ॥३।१।३।

## सुखमनिषिद्धमुपादेयम् ॥ ३ । १ । ४ ।

सुखं शर्म । अनिषिद्धं शास्त्रीयनिषेधाविषयीभूतम्प्रशस्तमितियावत् । उपादेयं ग्राह्यम् । "अविरुद्धसुखत्यागी पशुरेव न संशयः" इत्यादिशिष्टोक्तिः प्रकृतं पोषयतीति वेदितव्यम् ॥३।१।४।

## मनउद्वेगनिमित्तं दुःखम् ।३।१।५।

मन उद्वेगनिमित्तम्मनसः उद्वेगनिमित्तम् उद्वेगहेतुः । तथाभूतं दुःखं कष्टम् । यः कश्चिदर्थो मन उद्वेजयति सोऽर्थः दुखपदवाच्यो भवतीत्यर्थो वेदितव्यः । विषयोपभोगः प्रसिद्ध्या सुखपदवाच्योऽपि सन् यदि ज्ञानिनां विषयनिर्विण्णचेतसाम्मन उद्वेजयति तर्हि सोऽपि दुःखमेव। तथा सूत्रितम् श्रीमता पतञ्जलिना "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति भोगेष्विन्द्रियाणाम् लौल्यादनुपशान्तिः सैव दुःखपदवाच्या भवतीत्यर्थो वेदितव्यः॥३।१।५।

## मनःप्रसादनिमित्तं सुखम् । ३ । १ । ६ ।

मनःप्रसादनिमित्तम्मनसः प्रसन्नताहेतुः । तथाभूतं सुखं शर्म्म । यः कश्चिदर्थो मनः प्रसादयति सोऽर्थः सुखपदवाच्यो भवतीत्यर्थो वेदितव्यः । विषयानुपभोगः प्रसिद्धया दुःखपदवाच्योऽपि सन् यदि ज्ञानिनाम् आत्मारामाणाम्मनः प्रसादयेत् तर्हि सोऽपि सुखमेवेति वेदितव्यम् । तथाचोक्तं भगवद्गीतायाम् "यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्" इति । यद्वा कदन्नजीर्णपटादि वस्तु प्रसिद्ध्या दुःखपदवाच्यम् । यदि सन्तुष्टचेतसां चेतःप्रसादाय भवेत् तदा तदपि सुखमेव वेद्यम् । तथाच पातञ्जलसूत्रम् "सन्तोषादनुत्तमसुखलाभः" इति । भोगेष्विन्द्रियाणां तृप्तेर्योपशान्तिः सा सुखपदवाच्या भवति । ननु लोके भोजनादिरूपविषयोपभोगात्तृप्तिदर्शनादस्तु विषयोपभोग एव तृप्तिहेतुर्न तदनुपभोग इति चेत्तदुच्यते- नहीन्द्रियाणां विषयोपभोगेन तृप्तिः सम्पादयितुं शक्या कस्मात् यतो विषयोपभोगमनुविवर्द्धमानो रागो रागिणं क्लिश्नाति । तस्मान्न हेतुस्तृप्तेर्विषयोपभोग इति वेदितव्यम् । ततश्चानुपायो विषयोपभोग उपशान्तेस्ततः सुखस्येत्युपपन्नं वेदितव्यम् । तथा च स्मर्यते "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते" इति ।३।१।६।

इति परमपूज्यपादश्रीमद्योगदत्तशर्मकृताऽमृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्मशिष्यश्रीमत्सत्यनारायणशर्मकृतभाष्ये तृतीयाध्यायस्य प्रथमः पादः समाप्तः ॥

श्रीमान् गुरुवरः सूत्रकारो दुःखस्य हेतुं दर्शयति साधकानां तदवगमात् ततो निग्रहनिष्पत्तेः-

## कामनाभिघाताद्दुःखम् ।३।२।१।

कामनाभिघातात् मनोरथभङ्गात् । दुःखं कष्टम् । अत्र भवतीति योजनीयम् । एतावता एतदुक्तं भवति कामना प्रतिहता सती दुःखमुत्पादयति ततः सैव तद्धेतुः सती कार्यकारणयोरभेदाभ्युपगमात् तद्रूपभूता च । तथाच स्मर्यते दुःखं कामसुखापेक्षा" इति । उक्तञ्च भगवद्गीतायाम् "कामात् क्रोधोऽभिजायते" इति । कामात्प्रतिहताद्दुःखमुत्पद्यमानं क्रोधरूपेण परिणमते इत्यर्थो

वृद्धसम्मतो वेदितव्यः । दृश्यतेऽपि लोके कामुको जनः केनचित्प्रतिहतकामः सन् दुःखमनुभवन् सामर्षो जिघांसाचरितश्च । अतश्चेयं कामना प्रयत्नसहस्रैर्विषयदोषदर्शनाद्युपायैस्त्याज्यैवेति वेदितव्यम् । तथाचोक्तमष्टावक्रगीतायाम् "विहाय वैरिणं काममर्थं चानर्थसंकुलम् । धर्ममर्थं तपोहेतुं सर्वत्रानादरं कुरु" इति "काममाश्रित्य दुःपूरं दम्भमानमदान्विताः। मोहाद्गृहीत्वा सद्ग्राहान् प्रवर्त्तन्तेऽशुचिव्रताः । चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदितिनिश्चिताः । आशापाशशतैर्बद्धाः कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् । इदमद्य मया लब्धमिदम्प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्द्धनम् । असौ मया हतः शत्रुर्हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी । आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्षे दास्यामि मोदिष्य इत्यज्ञानविमोहिताः। अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ" इति भगवद्गीतोक्तिरपि कामनां दुःखहेतुं प्रतिपादयन्ती निन्दतीति वेदितव्यम् ।३।२।१।

## तद्विपर्ययाच्च सुखम् । ३ । २ । २ ।

तद्विपर्ययात् कामनाऽनभिघातात् । चेति पुनरर्थकमव्ययम् । सुखं शर्म्म। अत्र भवतीति योजनीयम् । यद्वा तद्विपर्ययात् अकामनायाः तृष्णाक्षयादिति यावत् । तथाच स्मर्यते "यच्च कामसुखं लोके यच्च स्वर्गे महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। अर्जयित्वाऽखिलानर्थान् भोगानाप्त्वाऽतिपुष्कलान् । नहि सर्वपरित्यागमन्तरेण सुखी भवेत् । कर्तव्यो दुःखमार्त्तण्डज्वालादग्धान्तरात्मना। कुतः प्रशमपीयूषधारासारमृते सुखम् । चिन्तया जायते दुःखम् नान्यथेति विनिश्चयम्। तया हीनः सुखी शान्तः सर्वत्र विगतस्पृहः" इत्यादि।३।२।२।

श्रीमान् गुरुवरः सूत्रकारो निरुक्तकामनां परिचाययति—

## साऽभीष्टाऽवियोगलाभयोः। ३ । २ । ३।

सा निर्दिष्टा कामना । अभीष्टावियोगलाभयोः ईप्सिता विश्लेषप्राप्त्योः । अत्र भवतीति योजनीयम् । अभीष्टाऽवियोगलाभसम्बन्धिनी कामना भवतीत्यर्थो वेदितव्यः । क्षेमपदवाच्यं प्राप्तरक्षणमपि अवियोगपदेनैवोपात्तमिति वेदितव्यम् । योगस्तु लाभपदवाच्य एवेति वेदितव्यम ।३।२।३।

श्रीमान् गुरुवरः सूत्रकारो निरुक्तकामनां क्रमेण वक्ष्यमाणसूत्रचतुष्टयेन दूषयति-

## सर्वं वस्तुजातं विनश्वरम् । ३ । २ । ४ ॥

सर्वमखिलम् । वस्तुजातं ब्रह्मेतरपदार्थसमूहः । विनश्वरमनित्यम् । अत्र चिन्तनीयमिति योजनीयम् । तथाचोक्तम्भगवद्गीतायाम् "नाऽसतो विद्यते भावः" इति । तथाच श्रूयते "अतोऽन्यदार्त्तम्" इति । एतावता एतदुक्तं भवति यतो निरुक्ताशेषपदार्थः अनित्यस्ततः तस्य कामना अनित्यवस्तुप्रापिका अज्ञाननिबन्धना व्यर्थैवेति । ३।२।४।

## प्राप्तिरप्यनियामिका ।३।२।५।

प्राप्तिर्लाभः । अपीति निश्चये । अनियामिका स्वनिष्पत्तौ विशयविषया अनिश्चया इति यावत् । एतावता एतदुक्तं भवति कामना गर्हिता कामितार्थप्राप्तावनियमात् तदर्थप्रयासप्राचुर्य्याच्च प्राप्तावपि प्राप्तार्थविनश्वरत्वात् सा गर्हितैवेति भावो वेदितव्यः।३।२।५।

## अतः सापि दुःखपर्यवसायिनी ।३।२।६।

अतो निरुक्तार्थविनश्वरत्वाद्धेतोः । सापि प्राप्तिरपि । दुःखपर्यवसायिनी दुःखोदर्का दुःखरूपोत्तरफलप्रदा इति यावत् । एतावता एतदुक्तं भवति-योगे रक्षणप्रयासबाहुल्यात् वियोगे शोकादिप्रदत्वाच्च वस्तुप्राप्तिरपि गर्हितैव । अतस्तत्कामनाऽपि गर्हितैवेति भावो वेदितव्यः । दृश्यते च लोकेऽयं जनः पुत्राद्यर्थप्राप्तौ अहर्निशं दुःसहभारं परिवहन् व्याप्रियमाणो भवति । तद्विनाशे हाहेति वदन् मुहुरुष्णन्निःश्वसन् उरःकपालञ्च ताडयन्नुच्चैःप्ररुदन् दुःसहदुःखनिमग्नो भवतीति "संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित्" इत्यादि शिष्टोक्तिरपि प्रकृतं पोषयतीति वेदितव्यम् । यद्वा प्राप्तेरनियामिकत्वात् साऽपि कामनापि दुःखपर्यवसायिनी दुःखोदर्का व्यर्थाऽऽयासादिहेतुत्वादित्यर्थो वेदितव्यः।३।२।६।

## अनर्थस्य च हेतुः ।३।२।७।

अनर्थस्य नरकादेः। चेति राजदण्डादि समुच्चिनोति। हेतुः कारणम् । एतावता एतदुक्तम्भवति सा प्राप्तिः कामना वा अपुण्यजनकत्वात्

नरकाद्यनर्थं जनयति । राजदण्डादि दापयति चेति । तथाचोक्तम्भगवद्गीतायाम् "काममाश्रित्य" इत्यादि "पतन्ति नरकेऽशुचौ" इत्यन्तञ्च "अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम्" इत्यादिशिष्टोक्तिरपि प्रकृतं पोषयतीति वेदितव्यम् ।३।२।७।

इति परमपूज्यपादश्रीमद्योगदत्तशर्मकृतामृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्मशिष्यश्रीमत्सत्यनारायणशर्मकृतभाष्ये तृतीयाध्यायस्य द्वितीयः पादः समाप्तः ॥

## अमृतं ज्ञानसम्पाद्यम् । ३ । ३ । १ ।

अमृतम्मुक्तिः। ज्ञानसम्पाद्यं ज्ञानलभ्यम्। अत्र भवतीति योजनीयम्। तथाच श्रूयते "ज्ञानान्मुक्तिः" स्मर्य्यते च "ज्ञानादेवाऽमृतत्वम्" इति ३।३।१।

## ज्ञानम्मनननिष्पाद्यम् । ३।३।२ ।

ज्ञानं ज्ञप्तिः। मननसम्पाद्यम् श्रवणावधारितार्थशंकानिरसनरूपमनोव्यापारगम्यम्। तथा च श्रूयते "आत्मा वा रे! श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कारः कर्त्तव्यः" इति ।३।३।२।

## तदनुकूलं चित्तशोधनम् । ३ । ३ । ३ ।

तदनुकूलं ज्ञाननिष्पत्त्यनुकूलम् । चित्तशोधनम्मनसो रागादिरूपकषायापनोदनम्।अत्र भवतीति योजनीयम्। शुद्धे चेतसि शुद्धात्मप्रकाशाभ्युपगमात्। तथाचोक्तं कपिलगीतायाम् "बहिर्गतः कोऽपि शिष्यो निवृत्तः शीघ्रमालयम्। प्रविवेशान्धभवनंद्रष्टुं किंचिच्छशाक न। तत्र चास्मिन् स्थिरीभूते अन्धकारः प्रभाऽभवत् । तदेव दृश्यते वस्तु स्वयं चक्षुश्च पश्यति। अज्ञानपूर्णे हृदये तमःपूर्णे च मानसे। दृश्यते न च वस्तु वै पश्यता सुस्थिरीभूय । वस्तु तत्सर्वमेव हि हृदये त्वन्धभवने। दृश्यते च निरन्तरमकल्पितोद्भवं ज्योतिः। स्वयं ज्योतिः प्रकाशितम्। अकस्माद् दृश्यते ज्योतिस्तज्ज्योतिः परमात्मनि" इति ।३।३।३।

## यतो ग्राह्यग्राहकयोः साधर्म्यम् ।३।३।४।

यतः यस्मात्। ग्राह्यग्राहकयोः ग्रहणक्रियाकर्मकर्तृभूतयोरर्थयोः। साधर्म्यम् समानधर्मत्वम्। अत्र भवतीति योजनीयम्। यथा तेजीयश्चक्षुः तेजीयो रूपं गृह्णाति। यथा भास्वरं जलं भास्वरं सूर्येन्दुप्रति-

बिम्बं गृह्णाति । तथा शुद्धं चित्तं शुद्धमात्मानं गृह्णाति प्रकाशयतीति सादृश्यं वेदितव्यम् ।३।३।४।

## तच्च जन्माद्यनुकूलप्रवृत्तिहेतुसंस्कारापनोदनम् ।३।३।५

तच्छब्दः पूर्वोक्तचित्तशोधनं परामृशति । चकारः ज्ञानं समुच्चिनोति । जन्माद्यनुकूलप्रवृत्तिहेतुसंस्कारापनोदनम् जात्यायुर्भोगसञ्चिवप्रवृत्तिनिमित्तवासनानिराकरणम् । ये संस्कारा अनेकभवपूर्विका अनादिकालीनाः स्मृतिहेतवः जात्यायुर्भोगोन्मुखप्रवृत्तिनिमित्तीभूतास्ते वासनापदवाच्या भवन्तीति वेदितव्यम् । क्लेशकर्मविपाकानुभवनिमित्ताभिस्तु वासनाभिरनादिकालसंवासितमिदं चित्तम् चित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततमिति वृद्धसम्मतम् । तथा च स्मर्यते "वासना एव संसार इति सर्वा विमुञ्चत । यत्यागो वासनात्यागात् स्थितिरप्ययथातथा" इत्यतः निरुक्तवासनानिराकरणमेव चित्तशोधनपदवाच्यम् श्रीमद्गुरुवरसूत्रकारसम्मतमुपपन्नम्भवतीति वेदितव्यम् ।३।३।५।

## तच्च पापानुत्पत्तिध्वंसहेतुकर्मसम्भवम् ।३।३।६।

तच्छब्दः चित्तशोधनं परामृशति । चकारः पुनरर्थकः। पापानुत्पत्तिध्वंसहेतुकर्मसम्भवम् नित्यनैमित्तिकप्रायश्चित्तकर्मप्रसवम् । अत्र भवतीति योजनीयम् । तथाचोक्तं रामगीतायाम् "आदौ स्ववर्णाश्रमवर्णिताः क्रियाः कृत्वा समासादितशुद्धमानसः । समाप्य तत्पूर्वमुपात्तसाधनः समाश्रयेत्सद्गुरुमात्मलब्धये" इति "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इति भगवद्वाक्यमपि प्रकृतम्पोषयतीति वेदितव्यम् ।३।३।६।

## काम्यमपि सात्त्विकं फलानपेक्षं तस्य निमित्तम् ।३।३।७।

काम्यं सकामम् । अत्र कर्मपदं योजनीयम् । अपीति समुच्चये । सात्त्विकं सत्त्वगुणनिष्ठपन्नम् । फलानपेक्षं फलानां स्वर्गादीनाम् अनपेक्षा अव्यपाश्रयः यस्य तत्तथाभूतं स्वर्गादिफलवाञ्छाविरहितमित्यर्थः । तस्य निमित्तं चित्तशोधनस्य हेतुः । अत्र भवतीति योजनीयम् । तथाचोक्तम्भगवद्गीतायाम् "यज्ञार्थात्कर्मणोऽन्यत्र

लोकोऽयं कर्मबन्धनः'' "नियतं संगरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते'' "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि'' "यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्'' "कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म कुर्वन्ति संगं त्यक्त्वाऽऽत्मशुद्धये। युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्। अयुक्तः कामकारेण फले सक्तो निबध्यते'' इति ।३।३।७।

इति परमपूज्यपादश्रीमद्योगदत्तशर्म्मकृताऽमृतोपदेशे पूज्यपादश्रीमद्योगदत्तशर्म्मशिष्यश्रीमत्सत्यनारायणशर्मकृतभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः॥

## ततः सत्त्वसमुद्रेकः ।३।४।१।

ततः चित्तशोधनानन्तरम्। सत्त्वसमुद्रेकः सुखप्रकाशनादिरूपसत्त्वगुणाधिक्यम्। अत्र भवतीति योजनीयम्। तथाचोक्तम् "योगश्चित्तवृत्तिनिरोधः'' एतत्पातञ्जलसूत्रभाष्ये श्रीमता भाष्यकारेण व्यासेन चित्तं हि प्रख्या-प्रवृत्ति-स्थितिशीलत्वात् त्रिगुणम्। प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति। तदेव तमसाऽनुविद्धमधर्म्माऽज्ञानावैराग्यानैश्वर्य्योपगम्भवति। तदेव प्रक्षीणमोहावरणम्प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति। तदेव रजोलेशमलापेतं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगम्भवति। तत्परम्प्रसंख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च सत्त्वगुणात्मिका चेयम्'' "रजस्तमश्चाभिभूय सत्त्वं भवति भारत'' इतिभगवद्वाक्यमपि प्रकृतं पोषयतीति वेदितव्यम् ।३।४।१।

## रतिविरत्योश्चानुकूलप्रतिकूलयोः ।३।४।२।।

रतिविरत्योः रागविरागयोः। चेति पुनरर्थकः। अनुकूलप्रतिकूलयोः नित्यानित्यवस्तुनोः। अत्र समुद्रेको भवतीति योजनीयम्। एतावता एतदुक्तम्भवति चित्तशोधने सति साधनानुकूलनित्यवस्तुनः रागो वर्द्धते। साधकप्रतिकूलानित्यवस्तुनो विरागो वर्द्धत इति। यद्वा अनुकूलप्रतिकूलशब्दौ ज्ञानाज्ञानपरौ वेदितव्यौ ते च मोक्षबन्धहेतुत्वात्साधकानाम् अनुकूलप्रतिकूले भवितुमर्हत इति युक्तं वेदितव्यम्।

ज्ञानाज्ञाने च व्यपदिष्टे भवगद्गीतायाम् । "अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः । इन्द्रियार्थेषु वैराग्यमनहंकार एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु । मयि चानन्ययोगेन भक्तिरव्यभिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि। अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमितिप्रोक्तमज्ञानं यदतोऽन्यथा" इति, अत्र ज्ञानशब्देन ज्ञानसाधनमपि गृहीतमिति वेदितव्यम् ।३।४।२।

## आपरितोषादनावश्यकम् ।३।४।३।

आपरितोषात् परितोषपर्यन्तम् । अनावश्यकं काम्यम्। अत्र कर्माऽपि विधेयम्भवतीति योजनीयम्। तथाचोक्तम्भगवद्गीतायाम् "कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते । यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभते- अर्जुन ! । कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते" इति ।३।४।३।

## शुद्धे चेतसि परितोषः ।३।४।४।

शुद्धे चेतसि निर्मले चित्ते। परितोषः सन्तोषः कामासक्तिनिवृत्तिरिति यावत्। एष सन्तोषः साधकानुभूतिगोचरो वेदितव्यः। अत्र भवतीति योजनीयम्। तथाचोक्तमष्टावक्रगीतायाम् "क्व धनानि क्व मित्राणि क्व मे विषयदस्यवः। क्व शास्त्रं क्व च विज्ञानं यदा मे गलिता स्पृहा। विज्ञाते साक्षिपुरुषे परमात्मनि चेश्वरे। नैराश्ये बन्धमोक्षे च क्वचिन्ता मुक्तये मम' इति "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" इति पातञ्जलसूत्रमपि प्रकृतं पोषयतीति वेदितव्यम् ।३।४।४

## परितोषे त्वावश्यकमनावश्यकम् । ३ ।४।५।

परितोषे निरुक्तकर्मासक्तिनिवृत्तौ। तुशब्दः परितोषप्राक्कालीनामपरितोषाऽवस्थां व्यावर्तयति। आवश्यकं विधेयम्। अत्र कर्मेति योजनीयम् । अनावश्यकम् अविधेयम् । अत्र भवतीति योजनीयम् ।

तथा च भगवद्वाक्यम् "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। नैव तस्य कृतेनाऽर्थो नाकृतेनेह कश्चन" "सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते" इति ।३।४।५।



## अनात्मस्वविश्रान्तं मनः आत्मन्येव विश्राम्यति ।३।४।६।

अनात्मसु विषयेषु । अविश्रान्तमनुपशान्तम् मनोऽन्तःकरणम् । आत्मन्येव स्वस्वरूप एव । विश्राम्यति उपशाम्यति । तथाचोक्तमष्टावक्रगीतायाम् "कृतानि कति जन्मानि कायेन मनसा गिरा । दुःखमायासदं कर्म तदद्याप्युपरम्यताम् । भावाभावविकारश्च स्वभावादितिनिश्चिये । निर्विकारो गतक्लेशः सुखेनैवोपशाम्यति" इति ।३।४।६।

कथं विश्राम्यति इति दृष्टान्तजिज्ञासायां श्रीमान् गुरुवरः सूत्रकारो दृष्टान्तदानाय सूत्रयति—

## यथा भारव्यपगमे गन्तव्यनिकटे पथिकः छायासु ।३।४।७।

यथा येन प्रकारेण । भारव्यपगमे भारोत्तारणे । गन्तव्यनिकटे गम्यसमीपे । पथिकः पान्थः छायासु निरातपदेशेषु । यथा पथिको गन्तव्यप्रदेशं प्राप्य भारं व्युत्तार्य छायासु विश्राम्यति । तथा अनात्मस्वविश्रान्तं मनः आत्मन्येव विश्राम्यतीति दृष्टान्तो वेदितव्यः । एतावता एतदुक्तम्भवति यथा पथिकः चिरकालम्भारं वहन्मार्गपरिश्रमं प्राप्नुवन् रौद्रसन्तापमनुभवन् दुःखीयति । स च गन्तव्यनिकटं गत्वा भारंव्युत्तार्य्य भारव्यपगमोत्थं विश्रामसुखम्भुंक्ते छायासु सन्तापनिवृत्तिञ्च लभते । तथाऽयम् साधकोऽनादिकालेन संसारभारं वहन्नूर्ध्वमुत्पतन्नधःप्रपतन् तत्रत्यमार्गपरिश्रमं प्राप्नुवन्नाध्यात्मिकादितापत्रयमनुभवन् दुःखीयति । स्वस्वरूपं सच्चिदानन्दात्मानं प्राप्य व्यपगतसंसारभारःसंसारभारव्यपगमोत्थं सुखं भुंक्ते । निरवधिसुखनीरधावात्मनि तापत्रयनिवृत्त्यास्पदे छायोपमे तापत्रयरूपसन्तापनिवृत्तिञ्च लभते ततो मुक्तिरसमास्वादयतीति भावो वेदितव्यः । यद्यपि विश्रान्तिलाभादिदानीमपि मुक्तिदशाप्राप्तिरुपपद्यत एव तथाप्यद्यकैवल्यस्य प्रारब्धक्षयक्षणप्रतीक्षणत्वाभ्युपगमात् निकटवर्त्तित्वोपपत्तेः । उपपन्नमस्मिन्सूत्रे निकटशब्दोपादानमिति वेदितव्यम् । ३ । ४ । ७ ।

## कैवल्यन्तु प्रारब्धक्षये ३ । ४ । ८ ।

कैवल्यममृतम् विदेहमुक्तिरिति यावत् । तुशब्दः शान्तिं व्यावर्तयति ।

प्रारब्धक्षये अवश्यभोक्तव्यकर्मावसाने। अत्र भवतीति योजनीयम्। केवलस्य भावः कैवल्यम् केवलशब्दो मात्रशब्दसधर्म्मा स्वस्य सत्त्वं स्वस्मादितरस्यासत्त्वं ज्ञापयति। ततः कैवल्यशब्देन कार्य्यकारणसंघातरूपेण स्थूलसूक्ष्मकारणात्मकशरीरत्रितयेन राहित्यं सच्चिदानन्दात्ममात्रेणाद्वैतभावेन शश्वदवस्थानमभिधीयते। यद्यपि जीवन्मुक्तावपि एतादृगेवावस्थानम् निरभिमानन्तिष्ठति। तथापि जीवन्मुक्तः पुरुष आप्रारब्धं संस्कारशेषेण चक्रभ्रमिवद्धृतशरीरस्तिष्ठति। क्षीणे च प्रारब्धे शरीरनिर्मुक्त एकान्तिकमात्यन्तिकञ्च कैवल्यमश्नुते। तदानीमविद्यानिवृत्तेरविद्यया नीयमानं धर्म्माऽधर्म्मसुखदुःखरागद्वेषात्मकं पौनःपुन्येन परिवर्त्तमानं संसारचक्रं निवर्त्तते। प्रवर्त्तते च तापत्रयनिवृत्तिपूर्व्वकः शीतलामृतरसमयसिन्धुसन्दोहः। तथा च सूत्रितं महर्षिणा श्रीमता कपिलेन "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति। नन्वत्र सूत्रे दुःखात्यन्तनिवृत्तिपदप्रवृत्त्या दुःखाभाव एव मोक्षो न कश्चिद्भावरूपार्थ इति व्यज्यते। तथाच सुखरूपात्माऽपलापादिमहदासमञ्जस्यमापतति। तत्रोच्यते नकैवल्यशब्दोऽभावं ज्ञापयति। किन्तु केवलस्य भावं स्वस्वरूपं सच्चिदानन्दमात्रमात्मानम्। तथाचोक्तमुत्तरगीतायाम् "कैवल्यं केवलं शान्तं शुद्धमत्यन्तनिर्म्मलम्। कारणं योगनिर्म्मुक्तं हेतुसाधनवर्ज्जितम्" इति "तत्त्वाभ्यासान्नास्मि न मे नाहम्" इत्याकारकं संशयविपर्य्ययरहितं सत्त्वपुरुषान्यताख्यातिसमुत्थं विशुद्धं ज्ञानमुत्पद्यमानमावरणमपनीय आत्मनःप्रकृतितादात्म्याऽध्यासरूपामविद्यां निवर्त्त्यैतियावत्। दुःखत्रयाभावमुद्भाव्य ज्ञानभोगाभ्यामशेषकर्म्मक्षये कैवल्यपदवाच्यं स्वरूपावस्थानं निरतिशयसुखस्वरूपं साक्षात्करोतीति तात्पर्य्यं वेदितव्यम् "जीवन्मुक्तपदन्त्यक्त्वा स्वदेहे कालसात्कृते। विशत्यदेहमुक्तत्वम्पवनोऽस्पन्दतामिव" "व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ। सलिलकण इवाम्बुधौ महात्मा विगलितवासनमेकतामगाम" "ब्रह्मभूतःप्रसन्नात्मा ब्रह्मानन्दमयःसुखी" 'यो वै भूमा तत्सुखम्' इत्यादि श्रुतयः प्रकृतार्थम्प्रमापयन्तीति वेदितव्यम्। न च दुःखत्रयाभावः कैवल्यरूपभावपदार्थः सम्पद्यत इत्यपि वक्तुं शक्यते लोकेऽभावाद्भावसम्पत्तेरदर्शनात्। सति चाभ्युपगम्यमाने तथात्वे। सम्पद्यतां निर्बीजभूमावङ्कुरसम्पत्तिः। सम्पद्यतांहैमन्तिकान्नबीजादाश्विनाऽन्नबीजाभावरूपादाश्विनान्नसम्पत्तिः। सम्पद्यताम्भक्षणाभावात्क्षुन्निवृत्तिः। सम्पद्य-

ताञ्च भक्तथभावाद्देवताप्रीतिः । परन्तु न चैवं दृश्यते । तस्मादनुपपन्ना दुःखाभावस्य कैवल्यभावसम्पत्तिः । किन्तु सन्नेव केवलात्मा कैवल्यरूपदुःखव्यपगमे वाय्वपनीताभ्रमण्डलं विद्यमानसहस्रांशुमण्डलमिव ज्ञानापनीताज्ञानमण्डलः ततएव व्यपगततापत्रयाग्निचक्रबालोऽनन्ताखण्डमण्डलाकारो द्योतते ।ननु लोके कृशगात्रस्य निर्ब्बलस्य रोगिणः प्रतिकारबलेन रोगाभावसमनन्तरं शरीरपुष्टिर्बलवृद्धिश्च क्रमशो दृश्यते । तत्कथं नाऽभावाद्भावसम्पत्तिरित्युक्तिः सम्भवेदिति प्रष्टव्येप्रतिवचनम् न रोगाभावः शरीरपुष्टिबलवृद्धिसाधकः किन्तु तत्प्रतिबन्धकबाधक एवेति वेदितव्यम् । स्वभावस्थितिन्यूनाधिक्यरूपं धातुवैषम्यमेव व्याधिशब्देनाऽभिधीयते । तद्रूपं ज्वराद्यभिधानं व्याधिसत्त्वं प्राणादिवायूनां नाड़ीषु सम्यक्चलनम् । तत्र च शोणितस्य सम्यक्सञ्चारम् ततो रसादिरूपसम्यक् परिणामञ्च रोधयति । तत एव कार्श्यम् दौर्बल्यञ्च क्रमेण जायते । व्याधिरूपप्रतिबन्धकनिवृत्तावप्रतिबद्धे शरीरपुष्टिबलवृद्धी सम्पद्येते इति वेदितव्यम् । अनयैव अभावप्रत्याख्यानमुद्रया आत्यन्तिकदुःखनिवृत्तिमेव पुरुषार्थमभिमन्यमानास्ता।र्किका अपि प्रत्याख्याता इति वेदितव्यम् । वस्तुतो निर्विकल्पकसमाधानमेव कैवल्यावस्थानशरीरं भवति । केवलं व्युत्थानसत्त्वासत्त्वभेदविभाव्यस्तयोर्भेदोऽधिगम्यते । समाधौ व्युत्थानं भवति । कैवल्ये तन्नेत्याशयो वेदितव्यः। व्युत्थानप्रयोजकादृष्टसम्बुद्धवासनासंस्कारशेषोपस्थितिर्निर्विकल्पकसमाधेर्जीवनमुक्तं व्युत्थापयति । तद्वासनासंस्काररहितो विदेहमुक्तः सर्व्वदैव स्वरूपसंस्थो ब्रह्मभावभूतो विजयते। तथाच श्रूयते "विमुक्तश्च विमुच्यते न तस्य प्राणाः समुत्क्रामन्ति तत्रैव समवलीयन्ते" इति । अत्रत्यो निर्विकल्पकसमाधिशब्दो बाह्याभ्यन्तरक्रियाराहित्ये तात्पर्य्यवान् ।तच्च सांख्यानां सांख्यैर्योगिनाञ्च योगैःसिध्यति । तथाच भगवद्वाक्यम् "यत्सांख्यैः प्राप्यते स्थानन्तद्योगैरपि गम्यते । एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति" इति।यत्साङ्ख्यैरिति साङ्ख्यैः संख्यायते ज्ञायत आत्माऽनेनेति साङ्ख्यं ज्ञानं तैः साङ्ख्यैः ज्ञानैःपूर्व्वोत्तरभू मिजायमानसाधनसिद्धिस्वरूपज्ञानबाहुल्याभिप्रायेण साधकबाहुल्याभिप्रायेण वा सांख्यैरित्यत्र बहुवचनप्रयोगो वेदितव्यः । यद्वा अर्शाद्यचि कृते साङ्ख्यमस्यास्तीति साङ्ख्यः ज्ञानी तैः साङ्ख्यैर्ज्ञानिभिरित्यर्थो वेदितव्यः "प्राकृतेषु वस्तुषु दोषदर्शनपुरस्सर आत्मविवेकः सांख्यम्" इत्येतच्छास्त्रीयसूत्रविज्ञापितैर्विवेकै-

रिति यावत्। यत्स्थानमात्मपदम्प्राप्यते लभ्यते तत्स्थानमात्मपदं योगैः पूर्वोत्तरभूमिजायमानसाधनसिद्धिस्वरूपैरुपायैः 'स्वरूपपरिचयो योगः' इत्येतच्छास्त्रीयसूत्रविज्ञापितैः स्वरूपपरिचयैरितियावत्। अर्शाद्यचिकृते योगवद्भिर्योगैरित्यर्थो वा वेदितव्यः। अपीति समुच्चये।गम्यते लभ्यते। एतावता साङ्ख्ययोगयोः सामान्येनाऽऽत्मपदप्रापकत्वमभिहितमिति वदितव्यम्। ततः साङ्ख्यं योगञ्चात्मपदस्वरूप समानार्थप्रापकत्वेन समानं यः पश्यति वेत्ति स पश्यति यथार्थवेत्ता भवतीत्यभिप्रायो वेदितव्यः । केषाञ्चिज्जनानांकोमलहृदयानामसम्प्रज्ञातपदवाच्यनिर्व्विकल्पकसमाधेः पुनर्व्युत्थानं न भवतीति संशयो हृदि जागर्त्ति। अतः प्रस्तूयते तेषाम्प्रबोधविचारः। निर्व्विकल्पकसमाधिसंस्थः पुरुषो धृतशरीरो मृत्युमापन्नो भवति जीवति वा। आद्ये शरीर धारणासम्भवः। तस्मिन्नपि कथञ्चित् स्वीकृते व्युत्थानाभावे इष्टापत्तिः जीवद्दशानभ्युपगमात् कैवल्योपपत्तेः । द्वितीये जीवनदशासचिवप्राणधारणावश्यम्भावसम्भाव्यमानत्वे प्राणस्य शास्त्रप्रसिद्ध सूक्ष्मशरीरैकावयवभूतत्वात् जीवद्दशायाम् प्राणसत्त्वसंसूचितं सूक्ष्मशरीरसत्त्वं सम्भवति। सति च तत्सम्भवे मृत्तिकामयघटकार्य्यसत्वे मृत्तिकारूपकारणसत्त्वदर्शनात् कारणशरीरकार्य्यसूक्ष्मशरीरसत्वे कारणशरीरसत्त्वमुपपन्नम्भवति। सत्याञ्च तदुपपत्तौ कारणशरीरपदवाच्याया अविद्यायाः सत्त्वं सिध्यति "अविद्यावशगो जीवस्तद्वैचित्र्यादनेकधा। साकारणशरीरं स्यात्। प्राज्ञस्तत्राभिमानवान्" इत्युक्तिः कारणशरीरस्याऽविद्यात्वप्रमापणे नितरां जागर्त्ति। सत्यविद्यासत्त्वे तत्कार्य्यवासनासत्त्वमपि सम्भवत्येव। ततो ह्यव्याहतमेव वासनाजन्यं व्युत्थानं निर्व्विकल्पकसमाधाविति वेदितव्यम्। अपि च निर्व्विकल्पकसमाधौ संस्कारशेषनिरोधः स्वीक्रियत आचार्य्यैः। तत्र निरोधः संस्कारस्य सत्त्वमवगमयति न चासत्त्वम् । असत्त्वे निरोधासम्भवात् सति सत्वे सुषुप्तेरिव व्युत्थानमपि सम्भाव्यत एव। यदि सर्व्वदा निरोधः स्वीक्रियेत समाध्यनुच्छेदस्वीकारात्तर्हि यत्प्रारब्धं तस्मिन् समये शरीरधारणायाऽवकल्पते। तस्य समाधेः सर्व्वदैव व्युत्थानाभावस्वीकारात् क्षयाभावः प्रसज्येत। ततः संस्कारशेषसात्वत् कृतहानिदोषो दुर्निवार्य्यः प्रसज्येत। शास्त्रसिद्धान्तञ्च प्रारब्धस्याऽवश्यभोक्तव्यतारूपं व्याकुप्येत। ततः सिद्धमसम्प्रज्ञाताद्व्युत्थानं शास्त्रसम्मतेर्युक्तिसम्मतेश्चापि तथा सिद्धम् । " विरामप्रत्ययाभ्यासपूर्व्वः

संस्कारशेषोऽन्यः" "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" एतत्पातञ्जलसूत्रद्वयं प्रकृतार्थम्प्रमापयतीति वेदितव्यम् । जिज्ञासूनां जिज्ञासापूर्त्यै कैवल्यस्वरूपं चिन्मयं स्वच्छाकाशोपमम्प्रतिपाद्यते। तथाचोक्तं योगवाशिष्ठे "देशाद्देशान्तरं दूरं प्राप्तायाः संविदो वपुः । निमेषेणैव तन्मध्ये चिदाकाशं तदुच्यते" "अनागतायां निद्रायां मनोविषयसंक्षये । पुंसः स्वस्थस्य यो भावः स चिदाकाश उच्यते" इति। एतावता एतदुक्तम्भवति दृश्यानुपरक्तं दृङ्मात्रस्वरूपं यन्निर्म्मलं ब्रह्मस्वरूपं ज्ञानं तत्कैवल्यमित्यभिधीयते । व्युत्थानसंस्कारो व्यवहारवहो भवति। सम्प्रज्ञातसंस्कारो विवेकवहो भवत्यसम्प्रज्ञातसंस्कारश्च सुप्तो भवति इत्येषां व्युत्थानसम्प्रज्ञातासंप्रज्ञातसंस्काराणाम् वैसादृश्यं वेदितव्यम् । यथा स्वप्नदशायामिन्द्रियवृत्तिराहित्यपूर्व्वकम्मनसः सङ्कल्पसङ्कलितविषयवृत्तिमत्वम् भवति । तथा सम्प्रज्ञाते मनसः सङ्कल्पमयाखण्डाकारब्रह्मस्वरूपवृत्तिमत्त्वं वेदितव्यम् । यथासुषुप्तिदशायामिन्द्रियमनोवृत्तिराहित्यपूर्व्विकास्वसम्प्रसादसम्पत्तिः सम्पद्यते । तथाऽसम्प्रज्ञातेऽपि तत्सम्पत्तिर्व्वेदितव्या । अज्ञानावरणसत्त्वासत्त्वाभ्याम् सुषुप्त्यसम्प्रज्ञातयोर्वैलक्षण्यं वेदितव्यम् । ननु निर्विकल्पकसमाधौ सर्व्ववृत्तिनिरोधाभ्युपगमात् कथमानन्दभानम्भवतीति प्रष्टव्ये प्रतिवचनम् । यथा सुषुप्तौ "सता सौम्य तदा सम्पन्नो भवति" "पुरीतति शेते" इत्यादि श्रुतिस्वरसेन स्वस्याऽऽत्मनः स्वात्मनि निर्व्विषये सम्प्रसादस्वरूपे सम्पत्तिसत्वेऽपि "सुखमहमस्वाप्सम्" इति श्रुतिबलेन प्रबोधदशायाम् सौषुप्तसुखानुभव प्रसिद्धेः सुखानुभवसत्त्वोपपत्तौ तदनुभवितुरपि उपपद्यमानत्वात् । तस्यां सुषुप्तिदशायां स्थूलसूक्ष्मशरीरवृत्त्यप्रवृत्तिमत्त्वेऽपि काचित्सूक्ष्मा बुद्धिवृत्तिः तत्सुखानुभवित्री शास्त्रैः तद्विद्भिर्वृद्धैश्च स्वीक्रियते। तथैव निर्विकल्पकसमाधावपि "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिवसमाधिः" इतिपातञ्जलसूत्रस्वरसेनाऽऽत्मस्फूर्त्तिमात्रस्थितौ समस्तविषयजाताकृत्यनुभूतिनिवृत्तावपि "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः" इतिपातञ्जलसूत्रबलेन तत्रापि निर्विकल्पस्थितौ प्रत्ययानुभवसत्त्वस्वीकारात् तदनुभविका काचिद्बुद्धिवृत्तिः "प्रत्ययम्बौद्धमनुपश्यति" इत्यव्यवहितप्रागुक्तसूत्रीयभाष्यबलेन स्वीक्रियते । सा तदभिन्ना भिन्ना वेति निर्णेतुमशक्या प्रकाशात्मकत्वात्प्रकाशकात्मसारूप्यात् । वस्तुतः तत्स्वरूपैवेति भानमापन्ना भवति। तत्रात्मेतरार्थाऽस-

त्वात् । तथाच भगवद्वाक्यम् । "यत्रोपरमते चित्तं निरुद्धं योगसेवया यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति । सुखमात्यन्तिकं यत्तद्बुद्धि ग्राह्यमतीन्द्रियम्" "यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्विकम्प्रोक्तमात्मबुद्धिप्रसादजम्" इति । एवं प्रमाणप्रमापितमानन्दभानमुपपन्नम्भवतीति वेदितव्यम् । कैवल्येऽपि स्वरूपमात्रप्रतिष्ठायामयं निर्विकल्पकसमाधानीयन्यायो नेतव्यः "ब्रह्मविद्ब्रह्मैव भवति' इतिश्रवणात् । सर्व्वावरणभङ्गाज्जीवजगद्ब्रह्मैकत्वप्रतिपत्तिरूपाद्वैतदशायामपि कैवल्ये "साक्षी चेता केवलो निर्गुणश्च" इति श्वेताश्वतरोपनिषच्छ्रवणात् केवलस्य कैवल्यरूपस्याऽप्यात्मनः साक्षित्वस्वीकाराद्भवत्येव स्वीकार्य्यः एतत्साक्षित्वप्रयोजकः साक्ष्यविषयरूपः कश्चिद्भावः, केवलाकारस्य निर्विकल्पकसच्चिदानन्दात्ममात्रस्वप्रकाशबोधस्याऽकर्त्तुरक्रियस्येति यावत् । "साक्ष्यहं किञ्चिदप्यत्र न कुर्व्वे नापि कारये" इतिश्रुत्युक्तलक्षणस्य स्वसत्तासामान्यपदवाच्या सच्चिदानन्दात्ममात्रा नैसर्गकी अप्रयत्नसिद्धेतियावत् । केवलभावस्वभावभूतास्वरूपप्रतिष्ठैव काचिदस्तिता । साक्ष्यविषयरूपः कश्चिद्भावोऽभ्युपगन्तव्यः । तथा च श्राव्यते कैवल्यप्रक्रान्तया श्रुत्या "स्वानुभूत्येकमानञ्च यत्तत्वन्तदसौ स्थितः । यदेकञ्चाऽप्यनेकञ्च साञ्जनञ्च निरञ्जनम् । यत्सर्वं चाप्यसर्वं च यत्तत्वं तदसौ स्थितः । निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः । न चेतनो न च जड़ो न चैवासन्न सन्मयः' इत्यादि । एतासु श्रुतिषु "यदेकं चाऽप्यनेकं च साञ्जनं च निरञ्जनम्" इत्यादीनि कोटिद्वयावगाहीनि लक्षणानि कैवल्ये ब्रह्मात्मनः स्वस्यैव अनुभवितृत्वमनुभाव्यत्वं च प्रमापयन्ति अद्वैतम् द्वैतं चित्त्वमचित्त्वं चावगमयन्ति सन्ति अनिर्वचनीयतां प्रतिपादयन्तीति निपुणं विचार्य्यतां महद्भिर्धीधनैः । प्रसिद्धञ्चस्वसंवेद्यत्वं स्वप्रकाशकत्वञ्च ब्रह्मणः शतशः सहस्रशश्च शास्त्रेषु । नन्वेकस्यैव ब्रह्मणोऽनुभवितृत्वानुभाव्यत्वोभयत्वस्वीकारे एकाधिकरणककर्म्मकर्तृत्वविरोधः प्रसज्येत इतिचेन्न "सर्वं खल्विदं ब्रह्म" इति श्रुतिबलेन ब्रह्मणः सर्वाऽऽत्मत्वोपपत्तेः निरुक्तदोषः परिहर्तव्यः । अलौकिकार्थे लौकिकदृष्टान्तसमन्वयो न न्याय्यः । ततोऽस्मिन्नलौकिकार्थे ब्रह्मणि लौकिकदृष्टान्तमननुसृत्यापि वैदिकं शब्दप्रमाणं समन्वेतव्यम् । अपि च प्रलयकाले "सदेव सौम्येदमग्र आसीत्" इति श्रुत्या जीवजगज्जातनिरासेन अद्वैतस्थितिरवगम्यते । तत्रापि एवं

स्वीकृतौ अद्वैतमर्य्यादाऽबाधिता तिष्ठति । रसो वै सः रसो ह्येवायं लब्ध्वाऽऽनन्दीभवति" "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" "स्वानुभूत्येकमानं च यत्तत्वं तदसौ स्थितः । ब्रह्मभूतः प्रसन्नात्मा ब्रह्मानन्दमयः सुखी"इत्यादि श्रुतयोऽपि न व्याकुप्यन्ति । एताः श्रुतय आनन्दस्वभावेन स्वेनाऽऽत्मनाऽऽनन्दस्वभावस्य स्वस्याऽऽत्मनोऽनुभवनं स्पष्टं श्रावयन्ति । उक्तञ्च योगवाशिष्ठे "शुद्धं किमपि तद्भाति स्वानुभूतमपि स्फुटम् । यदवाच्यमनाद्यन्तमेकं द्वैतैक्यवर्जितम्" अपि च श्रीमान् वेदव्यासो वेदान्ताचार्य्य आत्मस्वरूपलिलक्षिषुरनेनैवाभिप्रायेण "आनन्दमयोऽभ्यासात्" अस्मिन् सूत्रे आनन्दशब्दमनभिधाय आनन्दमयशब्दमभिहितवानिति व्यक्तं व्यज्यते । यथा निर्विकल्पकसमाधौ द्रष्टृदृश्यदर्शनादिरूपत्रिपुटीलयाऽभ्युपगमेऽपि "यत्रोपरमते चित्तं निरुद्धं योगसेवया। यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति।सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्।वेत्ति यत्र नचैवाऽयं स्थितः चलति तत्त्वतः" इत्यादिभगवद्वाक्यानुमत्या आत्मना आत्मसुखानुभवनं सिध्यतिः तथैव कैवल्ये तथात्वस्वीकारेऽपि "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इत्याद्यनेकानां कैवल्यदशानन्दानुभवनप्रतिपादिकानां श्रुतीनामनुमत्याऽऽनन्दानुभवोऽभ्युपगन्तव्यः।यथा कश्चित्पुरुषः सम्प्राप्तपुत्रजन्मसञ्जातप्रसादः कियता चिरेण कालेन पुत्रजन्माद्यननुस्मरन्नपि स्मरन्निव प्रसीदति। पुष्यति च तस्य शरीरम्। यथा कश्चिज्जनः कारागारनिर्गतोऽननुभवन्नपि कञ्चित् लौकिकं सुखजनकशब्दादिविषयमनुभवन्निव हर्षभरभरितो दृश्यते । यथा च कश्चिद्बुभुक्षितोजनो हृद्यं स्वाद्वन्नं भुक्त्वाऽभुञ्जानोऽपि भोजनसमयसमनन्तरं तृप्यति हृष्यति च। एवमेव कैवल्यरूपः केवल आत्मा स्वं स्वभावमानन्दमात्मानमननुभवन्नपि अनुभवन्निवाऽऽनन्द एवाऽऽनन्दीभवतीति पर्य्यवसितं तात्पर्य्यं वेदितव्यम् । अपि च "सत्यं ज्ञानमनन्तम्ब्रह्म" इतिश्रुत्या ब्रह्मणो ज्ञानरूपत्वं प्रसिध्यति । तत्र ज्ञा धातोः "ल्युट् च" इति भावप्रत्ययकरणेन ज्ञप्तिपदवाच्यस्य ज्ञानमित्यस्याऽर्थो ज्ञानविषयता भवति "करणाधिकरणयोश्च" इति पाणिनेः करणप्रत्ययकरणेन ज्ञानमित्यस्य ज्ञानकरणताऽर्थो भवति । अधिकरणप्रत्ययकरणेन च तस्य ज्ञानाधिकरणताऽर्थश्च भवति । एवं ज्ञानात्मनः केनापि प्रकारेण स्वयं स्वेन स्वस्मिन् वा स्वानुभवनमुपपद्यत एव । अपि च "ब्रह्मविद्ब्रह्मैव भवति" इतिश्रुत्या लब्धकैवल्य-

स्यात्मनः ब्रह्मरूपत्वं प्रसिध्यति।ब्रह्मणश्च "तदैक्षत बहुस्यां प्रजायेय" इतिश्रुत्या ईक्षितृत्वं श्राव्यते "स ईक्षत लोकान्नुसृजा" इत्यपि श्रुतिः ब्रह्मणः ईक्षापूर्व्विकामेव सृष्टिमाचष्टे ।एवं यथा सृष्टौ ब्रह्मण ईक्षाऽभ्युपगम्यते। तथैव तस्य कैवल्येऽपि स्वानन्दानुभूतिरपि अभ्युपगम्यताम्। यानि यानि विधिमुखानि तटस्थानि वा लक्षणानि ब्रह्मणि समन्वीयन्ते तानि तान्येव कैवल्यात्मन्यपि सर्व्वाधिष्ठानभूते कूटस्थब्रह्मस्वरूपे समन्वेतव्यानि । तर्हि अघटितघटनापटीयस्त्वाद्ब्रह्मस्वभावात् शास्त्रीयसिद्धान्तसिद्धात् नाऽस्माकं किञ्चिदपि दुर्घटम् । यथा भक्तो जनः प्रेमरसाम्बुधिनिमग्नः आदेहगेहात् परिविस्मृतसर्वजगज्जालो निवृत्तबाह्याभ्यन्तरसमस्तवृत्तिसत्त्वःसहजाऽऽनन्दात्मिकां कामपि पराभक्तेः परां काष्ठामननुभवन्नपि अनुभवन्निव स्रवन्नेत्राम्बुर्निमीलितलोचनो लब्धरोमोद्गमः कृतकृत्यतामायाति । इति लोके भक्तजनानुभूतोऽर्थः साधुभिः प्रत्येतव्यो भवितुमर्हति । अपि च साहित्यशास्त्रं शृङ्गारक्रियानिष्पत्तिजन्यमत्यल्पकालिकं विषयानन्दं ब्रह्मानन्दसहोदरमुद्घोषयति । तत्र निष्पत्तिसमनन्तरं विषयी जनो निष्क्रियो निरहङ्कारो निर्मनस्को विगतसर्व्वव्यापारोऽननुभवन्नपि अनुभवन्निव सर्व्वेहोपरतिस्वरूपं विषयानन्दमानन्दीभवति। अयमर्थो हि लोके पामरजनानामप्यनुभूतिगोचरो वर्त्तते। एवमेतत् कैवल्यभागीयं सर्व्वं व्याख्यानं निरवद्यं वेदितव्यम् । समाप्तिश्च समगादियङ्कृतिः । अनया शमाप्यताम् कृतकृत्यतारूपम् इति शम् ॥

इति परमपूज्यपादश्रीमद्योगदत्तशर्मकृताऽमृतोपदेशे पूज्यपाद श्रीमद्योगदत्तशर्मशिष्यश्रीमत्सत्यनारायण शर्मकृतभाष्ये तृतीया ऽध्यायस्थ चतुर्थःपादः समाप्तः ॥







